Government Oriental Library Series.

BIBLIOTHECA SANSKRITA—No. 22.

# SRI-SANKARACHARYA'S MISCELLANEOUS WORKS.

## Vol. IV.

# श्रीशङ्करभगवत्पादीयप्रकरणप्रबन्धावलिः.

## चतुर्थसंपुटम्.

EDITED BY

A. MAHADEVA SASTRI, B.A.,
*Curator, Government Oriental Library, Mysore,*

AND

VAIDYARATNAM K. RANGACHARYA,
*Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS.

1899.



# EDITOR'S NOTE.

The works collected in this volume have been edited from the printed editions and the manuscript copies found in the Government Oriental Library and in the Mutt Libraries at Sringeri and Kudli.

A. M. S.

# ग्रन्थसूची.



## १. आत्मबोधविषयसूचिका.



## २. विवेकचूडामणिविषयसूची.

## ३. वाक्यवृत्तिविषयसूची.



## ४. स्वात्मनिरूपणविषयसूची.

---

## ५. योगतारावली.

---

## ६. सर्ववेदान्तसिद्धान्तसारसङ्ग्रहः.

# आत्मबोधः.

*तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम् ।
मुमुक्षूणामपेक्ष्योऽयमात्मबोधो विधीयते ॥ १ ॥

बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् ।
पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिद्ध्यति ॥२॥

अविरोधितया कर्म नाविद्यां विनिवर्तयेत् ।
विद्याऽविद्यां निहन्त्येव तेजस्तिमिरसङ्घवत् ॥ ३ ॥

अवच्छिन्न इवाज्ञानात्तन्नाशे सति केवलः ।
स्वयं प्रकाशते ह्यात्मा मेघापायेंऽशुमानिव ॥ ४ ॥

अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्विनिर्मलम् ।
कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥ ५ ॥

संसारस्स्वप्नतुल्यो हि रागद्वेषादिसङ्कुलः ।
स्वकाले सत्यवद्भाति प्रबोधे सत्यसद्भवेत् ॥ ६ ॥

तावत्सत्यं जगद्भाति शुक्तिका रजतं यथा ।
यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमव्ययम् ॥ ७ ॥

उपादानेऽखिलाधारे जगन्ति परमेश्वरे ।
सर्गस्थितिलयान् यान्ति बुद्बुदानीव वारिणि ॥ ८ ॥

---

*तत्र भगवान् शङ्कराचार्य उत्तमाधिकारिणां वेदान्तप्रस्थानत्रयं निर्माय तदवलोकनासमर्थानां मन्दबुद्धीनां अनुग्रहार्थं सर्ववेदान्तसिद्धान्तसंग्रथनमात्मबोधाख्यं प्रकरणं निदर्शयिषुः प्रतिजानीते—तपोभिरिति ॥ इति विश्वेश्वरटीकायाम्.

सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः ।
व्यक्तयो विविधास्सर्वा हाटके कटकादिवत् ॥ ९ ॥

यथाऽऽकाशो हृषीकेशो नानोपाधिगतो विभुः ।
तद्भेदाद्भिन्नवद्भाति तन्नाशे केवलो भवेत् ॥ १० ॥

नानोपाधिवशादेव जातिनामाश्रमादयः ।
आत्मन्यारोपितास्तोये रसवर्णादिभेदवत् ॥ ११ ॥

पञ्चीकृतमहाभूतसंभवं कर्मसंचितम् ।
शरीरं सुखदुःखानां भोगायतनमुच्यते ॥ १२ ॥

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ १३ ॥

अनाद्यविद्याऽनिर्वाच्या कारणोपाधिरुच्यते ।
उपाधित्रितयादन्यमात्मानमवधारयेत् ॥ १४ ॥

पञ्चकोशादियोगेन तत्तन्मय इव स्थितः ।
शुद्धात्मा नीलवस्त्रादियोगेन स्फटिको यथा ॥ १५ ॥

वपुस्तुषादिभिः कोशैर्युक्तं युक्त्यवघाततः ।
आत्मानमान्तरं शुद्धं विविच्यात्तण्डुलं यथा ॥ १६ ॥

सदा सर्वगतोऽप्यात्मा न सर्वत्रावभासते ।
बुद्धावेवावभासेत स्वच्छेषु प्रतिबिम्बवत् ॥ १७ ॥

देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो विलक्षणम् ।
तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा ॥ १८ ॥

व्यापृतेष्विन्द्रियेष्वात्मा व्यापारीवाविवेकिनाम् ।
दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी ॥ १९ ॥

आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः ।
स्वकीयार्थेषु वर्तन्ते सूर्यालोकं यथा जनाः* ॥२०॥

देहेन्द्रियगुणान् कर्माण्यमले सच्चिदात्मनि ।
अध्यस्यन्त्यविवेकेन गगने नीलतादिवत् ॥ २१ ॥

अज्ञानान्मानसोपाधेः कर्तृत्वादीनि चात्मनि ।
कल्प्यन्तेऽम्बुगते चन्द्रे चलनादि यथाऽम्भसः ॥२२॥

रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते ।
सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः ॥ २३ ॥

प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता ।
स्वभावस्सच्चिदानन्दनित्यनिर्मलताऽऽत्मनः ॥ २४ ॥

आत्मनस्सच्चिदंशश्च बुद्धेर्वृत्तिरिति द्वयम् ।
संयोज्य चाविवेकेन जानामीति प्रवर्तते ॥ २५ ॥

आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति[1] ।
जीवस्सर्वमलं ज्ञात्वा कर्ता[2] द्रष्टेति मुह्यति ॥ २६ ॥

रज्जुसर्पवदात्मानं जीवं ज्ञात्वा भयं वहेत् ।
नाहं जीवः परात्मेति ज्ञातश्चेन्निर्भयो भवेत् ॥ २७ ॥

आत्माऽवभासयत्येको बुद्ध्यादीनीन्द्रियाणि हि[3] ।
दीपो घटादिवत्स्वात्मा जडैस्तैर्नावभास्यते ॥ २८ ॥

स्वबोधे नान्यबोधेच्छा बोधरूपतयाऽऽत्मनः ।
न दीपस्यान्यदीपेच्छा यथा स्वात्मप्रकाशने ॥ २९ ॥

---

*केषु चित्कोशेषु श्लोकोऽयं न दृश्यते.

[1] जात्वपि. [2] ज्ञाता. [3] व्यपि.

निषिद्ध्य निखिलोपाधीन् नेतिनेतीतिवाक्यतः ।
विद्यादैक्यं महावाक्यैर्जीवात्मपरमात्मनोः ॥ ३० ॥

आविद्यकं शरीरादि दृश्यं बुद्बुदवत् क्षरम् ।
एतद्विलक्षणं विद्यादहं ब्रह्मेति निर्मलम् ॥ ३१ ॥

देहान्यत्वान्न मे जन्मजराकार्श्यलयादयः ।
शब्दादिविषयैस्सङ्गो निरिन्द्रियतया न च ॥ ३२ ॥

अमनस्त्वान्न मे दुःखरागद्वेषभयादयः ।
अप्राणो ह्यमनाश्शुभ्र इत्यादिश्रुतिशासनात् ॥ ३३ ॥

निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः ।
निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ॥ ३४ ॥

अहमाकाशवत्सर्वं बहिरन्तर्गतोऽच्युतः ।
सदा सर्वसमस्सिद्धो निस्सङ्गो निर्मलोऽचलः ॥ ३५ ॥

नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् ।
सत्यं ज्ञानमनन्तं यत्परं ब्रह्माहमेव तत् ॥ ३६ ॥

एवं निरन्तरकृता ब्रह्मैवास्मीति वासना ।
हरत्यविद्याविक्षेपान् रोगानिव रसायनम् ॥ ३७ ॥

विविक्तदेश आसीनो विरागो विजितेन्द्रियः ।
भावयेदेकमात्मानं तमनन्तमनन्यधीः ॥ ३८ ॥

आत्मन्येवाखिलं दृश्यं प्रविलाप्य धिया सुधीः ।
भावयेदेकमात्मानं निर्मलाकाशवत्सदा ॥ ३९ ॥

रूपवर्णादिकं सर्वं विहाय परमार्थवित् ।
परिपूर्णचिदानन्दस्वरूपेणावतिष्ठते ॥ ४० ॥

ज्ञातृज्ञानज्ञेयभेदः परे नात्मनि विद्यते ।
चिदानन्दैकरूपत्वाद्दीप्यते स्वयमेव तत् ॥ ४१ ॥

एवमात्माऽरणौ ध्यानमथने सततं कृते ।
उदिताऽवगतिज्वाला सर्वाज्ञानेन्धनं दहेत् ॥ ४२ ॥

अरुणेनेव बोधेन पूर्वं सन्तमसे हृते[1] ।
तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥ ४३ ॥

आत्मा तु सततं प्राप्तोऽप्यप्राप्तवदविद्यया ।
तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा ॥ ४४ ॥

स्थाणौ पुरुषवद्भ्रान्त्या कृता ब्रह्मणि जीवता ।
जीवस्य तात्त्विके रूपे तस्मिन्दृष्टे निवर्तते ॥ ४५ ॥

तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमञ्जसा ।
अहं ममेति चाज्ञानं बाधते दिग्भ्रमादिवत्[2] ॥ ४६ ॥

सम्यग्विज्ञानवान्योगी स्वात्मन्येवाखिलं स्थितम् ।
एकं च सर्वमात्मानमीक्षते ज्ञानचक्षुषा ॥ ४७ ॥

आत्मैवेदं जगत्सर्वमात्मनोऽन्यन्न किं चन[3] ।
मृदो यद्वद्घटादीनि स्वात्मानं सर्वमीक्षते ॥ ४८ ॥

जीवन्मुक्तिस्तु[4] तद्विद्वान्पू[5]र्वोपाधिगुणांस्त्यजेत् ।
स सच्चिदादिधर्मत्वात्[6] भेजे भ्र[7]मरकीटवत्* ॥ ४९ ॥

---

[1]हृते. [2]म यथा. [3]विद्यते. [4]जीवन्मुक्तस्तु.
[5]ताद्विद्यात्पू ; यो विद्वान्पू. [6]सच्चिदानन्दधर्मत्वं. [7]भजेद्भ.

*अनाद्यविद्यापरिकल्पितपूर्वोपाधीन् देहमनोबुद्ध्यादीन् गुणान् सत्त्वादीन् परित्यजेदिति यत् तदेव जीवन्मुक्तिरित्युच्यते । एवंभूतावस्थावान् सच्चिदादिगुणवत्त्वात् साक्षाद्ब्रह्म भेजे प्राप्नोतीत्यर्थः ॥ इति विश्वेश्वरकृतटीका.

तीर्त्वा मोहार्णवं हत्वा रागद्वेषादिराक्षसान् ।
योगी शान्तिसमायुक्त आत्मारामो विराजते ॥ ५० ॥

बाह्यानित्यसुखासक्तिं हित्वाऽऽत्मसुखनिर्वृतः ।
घटस्थदीपवच्छश्वदन्तरेव प्रकाशते ॥ ५१ ॥

उपाधिस्थोपि तद्धर्मैरलिप्तो व्योमवन्मुनिः ।
सर्वविन्मूढवत्तिष्ठेदसक्तो वायुवच्चरेत् ॥ ५२ ॥

उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः ।
जले जलं वियद्व्योम्नि तेजस्तेजसि वा यथा ॥५३॥

यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम् ।
यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥ ५४ ॥

यद्दृष्ट्वा नापरं दृश्यं यद्भूत्वा न पुनर्भवः ।
यज्ज्ञात्वा नापरं ज्ञेयं तद्ब्रह्मेत्यवधारयेत् ॥ ५५ ॥

तिर्यगूर्ध्वमधः पूर्णं सच्चिदानन्दमद्वयम् ।
अनन्तं नित्यमेकं यत्तद्ब्रह्मेत्यवधारयेत् ॥ ५६ ॥

अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽव्ययम् ।
अखण्डानन्दमेकं यत्तद्ब्रह्मेत्यवधारयेत् ॥ ५७ ॥

अखण्डानन्दरूपस्य तस्यानन्दलवाश्रिताः ।
ब्रह्माद्यास्तारतम्येन भवन्त्यानन्दिनो लवाः ॥ ५८ ॥

तद्युक्तमखिलं वस्तु व्यवहारश्चिदन्वितः ।
तस्मात्सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले ॥ ५९ ॥

अनण्वस्थूलमह्रस्वमदीर्घमजमव्ययम् ।
अरूपगुणवर्णाख्यं तद्ब्रह्मेत्यवधारयेत् ॥ ६० ॥

यद्भासा भासतेऽर्कादि भास्यैर्यत्तु न भास्यते ।
येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत् ॥ ६१ ॥

स्वयमन्तर्बहिर्व्याप्य भासयन्नखिलं जगत् ।
ब्रह्म प्रकाशते वह्निप्रतप्तायसपिण्डवत् ॥ ६२ ॥

जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किं चन ।
ब्रह्मान्यद्भाति चेन्मिथ्या यथा मरुमरीचिका ॥ ६३ ॥

दृश्यते श्रूयते यद्यत् ब्रह्मणोऽन्यन्न तद्भवेत् ।
तत्त्वज्ञानाच्च तद्ब्रह्म सच्चिदानन्दमद्वयम् ॥ ६४॥

सर्वगं सच्चिदानन्दं ज्ञानचक्षुर्निरीक्षते ।
अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥ ६५ ॥

श्रवणादिभिरुद्दीप्तज्ञानाग्निपरितापितः ।
जीवस्सर्वमलान्मुक्तः स्वर्णवद्द्योतते स्वयम् ॥ ६६ ॥

हृदाकाशोदितो ह्यात्मा बोधभानुस्तमोऽपहृत् ।
सर्वव्यापी सर्वधारी भाति भासयतेऽखिलम्[1] ॥६७॥

दिग्देशकालाद्यनपेक्ष्य सर्वगं
शीतादिहृन्नित्यसुखं निरञ्जनम् ।
यस्स्वात्मतीर्थं भजते विनिष्क्रियः
स सर्ववित् सर्वगतोऽमृतो भवेत् ॥ ६८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतं
आत्मबोधप्रकरणं समाप्तम्.

---

[1] सर्वं प्रकाशते.

# विवेकचूडामणिः

॥ गुरुनमस्क्रिया ॥

सर्ववेदान्तसिद्धान्तगोचरं तमगोचरम् ।
गोविन्दं परमानन्दं मद्गुरुं[1] प्रणतोऽस्म्यहम् ॥ १ ॥

॥ नरजन्मप्रशंसा ॥

जन्तूनां नरजन्म दुर्लभमतः पुंस्त्वं ततो विप्रता
तस्माद्वैदिकधर्ममार्गपरता विद्वत्त्वमस्मात्परम् ।
आत्मानात्मविवेचनं स्वनुभवो ब्रह्मात्मना संस्थितिः
मुक्तिर्नो शतकोटिजन्मसुकृतैः पुण्यैर्विना लभ्यते ॥ २ ॥

दुर्लभं त्रयमेवैतत् देवानुग्रहहेतुकम् ।
मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः ॥ ३ ॥

लब्ध्वा कथञ्चिन्नरजन्म दुर्लभं
तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् ।
यः स्वात्ममुक्त्यै न यतेत मूढधीः
स आत्महा स्वं विनिहन्त्यसद्ग्रहात् ॥ ४ ॥

इतः को न्वस्ति मूढात्मा यस्तु स्वार्थे प्रमाद्यति ।
दुर्लभं मानुषं देहं प्राप्य तत्रापि पौरुषम् ॥ ५ ॥

॥ आत्मबोध एव मुक्तिहेतुः ॥

पठन्तु शास्त्राणि यजन्तु देवान्
कुर्वन्तु कर्माणि भजन्तु देवताः ।
आत्मैकबोधेन विनाऽपि मुक्तिः
न सिद्ध्यति ब्रह्मशतान्तरेऽपि ॥ ६ ॥

---

[1] सद्गुरुं.

*[अमृतत्वस्य नाशाऽस्ति वित्तेनेत्येव हि श्रुतिः ।
ब्रवीति कर्मणो मुक्तेरहेतुत्वं स्फुटं यतः ॥ ७ ॥]

॥ मुक्त्यर्थो यत्नविशेषः ॥

अतो विमुक्त्यै प्रयतेत विद्वान्
संन्यस्तबाह्यार्थसुखस्पृहः सन् ।
सन्तं महान्तं समुपेत्य देशिकं
तेनोपदिष्टार्थसमाहितात्मा ॥ ८ ॥

उद्धरेदात्मनाऽऽत्मानं मग्नं संसारवारिधौ ।
योगारूढत्वमासाद्य सम्यग्दर्शननिष्ठया ॥ ९ ॥

[संन्यस्य सर्वकर्माणि भवबन्धविमुक्तये ।
यत्यतां पण्डितैर्धीरैः आत्माभ्यास उपस्थितैः ॥ १० ॥]

॥ विचारः कर्तव्यः ॥

चित्तस्य शुद्धये कर्म न तु वस्तूपलब्धये ।
वस्तुसिद्धिर्विचारेण न किञ्चित् कर्मकोटिभिः ॥ ११ ॥

सम्यग्विचारतः सिद्धा रज्जुतत्त्वावधारणा ।
भ्रान्त्योदितमहासर्पभयदुःखविनाशिनी ॥ १२ ॥

अर्थस्य निश्चयो दृष्टो विचारेण हितोक्तितः ।
न स्नानेन न दानेन प्राणायामशतेन वा ॥ १३ ॥

अधिकारिणमाशास्ते फलसिद्धिर्विशेषतः ।
उपाया देशकालाद्याः सन्त्यस्मिन् सहकारिणः ॥ १४ ॥

अतो विचारः कर्तव्यो जिज्ञासोरात्मवस्तुनः ।
समासाद्य दयासिन्धुं गुरुं ब्रह्मविदुत्तमम् ॥ १५ ॥

॥ आत्मविद्याऽधिकारी ॥

मेधावी पुरुषो विद्वान् ऊहापोहविचक्षणः ।
अधिकार्यात्मविद्यायां उक्तलक्षणलक्षितः ॥ १६ ॥

---

*[ ]एतच्चिह्नमध्यगतो भागः दाक्षिणात्यकोशेषु न दृश्यते । एवमुत्तरत्रापि.

[विवेकिनो विरक्तस्य शमादिगुणशालिनः ।
मुमुक्षोरेव हि ब्रह्मजिज्ञासायोग्यता मता ॥ १७ ॥]

॥ साधनचतुष्टयम् ॥

साधनान्यत्र चत्वारि कथितानि मनीषिभिः ।
येषु सत्स्वेव सन्निष्ठा यदभावे न सिद्ध्यति ॥ १८ ॥

आदौ नित्यानित्यवस्तुविवेकः परिगण्यते ।
इहामुत्रफलभोगविरागस्तदनन्तरम् ॥ १९ ॥

शमादिषट्कसम्पत्तिः मुमुक्षुत्वमिति स्फुटम् ।
ब्रह्म सत्यं जगन्मिथ्येत्येवंरूपो विनिश्चयः ॥ २० ॥

सोऽयं नित्यानित्यवस्तुविवेकः समुदाहृतः ।
तद्वैराग्यं जुगुप्सा या दर्शनश्रवणादिभिः ॥ २१ ॥

देहादिब्रह्मपर्यन्ते ह्यनित्ये भोग्यवस्तुनि ।
विरज्य विषयव्रातात् दोषदृष्ट्या मुहुर्मुहुः ॥ २२ ॥

स्वलक्ष्ये नियतावस्था मनसः शम उच्यते ।
विषयेभ्यः परावर्त्य स्थापनं स्वस्वगोलके ॥ २३ ॥

उभयेषामिन्द्रियाणां स दमः परिकीर्तितः ।
बाह्यानालम्बनं वृत्तेः एषोपरतिरुत्तमा ॥ २४ ॥

सहनं सर्वदुःखानां अप्रतीकारपूर्वकम् ।
चिन्ताविलापरहितं सा तितिक्षा निगद्यते ॥ २५ ॥

शास्त्रस्य गुरुवाक्यस्य सत्यबुद्ध्याऽवधारणा ।
सा श्रद्धा कथिता सद्भिः यया वस्तूपलभ्यते ॥ २६ ॥

सर्वधा स्थापनं बुद्धेः शुद्धे ब्रह्मणि सर्वदा ।
तत् समाधानमित्युक्तं न तु चित्तस्य लालनम् ॥ २७ ॥

अहङ्कारादिदेहान्तान् बन्धानज्ञानकल्पितान् ।
स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता ॥ २८ ॥

मन्दमध्यमरूपाऽपि वैराग्येण शमादिना ।
प्रसादेन गुरोः सेयं प्रवृद्धा सूयते फलम् ॥ २९ ॥

[वैराग्यं च मुमुक्षुत्वं तीव्रं यस्य तु विद्यते ।
तस्मिन्नेवार्थवन्तः स्युः फलवन्तः शमादयः ॥ ३० ॥

एतयोर्मन्दता यत्र विरक्तत्वमुमुक्षयोः ।
मरौ सलिलवत् तत्र शमादेर्भानमात्रता ॥ ३१ ॥]

मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी ।
स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते ॥ ३२ ॥
[स्वात्मतत्त्वानुसन्धानं भक्तिरित्यपरे जगुः ।]

॥ गुरूपसत्तिः ॥

उक्तसाधनसम्पन्नः तत्त्वजिज्ञासुरात्मनः ॥ ३३ ॥
उपसीदेत् गुरुं प्राज्ञं यस्मात् बन्धविमोक्षणम् ।
श्रोत्रियोऽवृजिनोऽकामहतो यो ब्रह्मवित्तमः ॥ ३४ ॥

ब्रह्मण्युपरतः शान्तो निरिन्धन इवानलः ।
अहेतुकदयासिन्धुः बन्धुरानमतां सताम् ॥ ३५ ॥

तमाराध्य गुरुं भक्त्या प्रह्वप्रश्रयसेवनैः ।
प्रसन्नं तमनुप्राप्य पृच्छेज्ज्ञातव्यमात्मनः ॥ ३६ ॥

स्वामिन्नमस्ते नतलोकबन्धो
कारुण्यसिन्धो पतितं भवाब्धौ ।
मामुद्धरात्मीयकटाक्षदृष्ट्या
ऋज्व्याऽतिकारुण्यसुधाभिवृष्ट्या ॥ ३७ ॥

दुर्वारसंसारदवाग्नितप्तं दोधूयमानं दुरदृष्टवातैः ।
भीतं प्रपन्नं परिपाहि मृत्योः शरण्यमन्यं यदहं न जाने ॥ ३८ ॥

शान्ता महान्तो निवसन्ति सन्तो
वसन्तवल्लोकहितं चरन्तः ।
तीर्णाः स्वयं भीमभवार्णवं जनान्
अहेतुनाऽन्यानपि तारयन्तः ॥ ३९ ॥

अयं स्वभावः स्वत एव यत् पर-
श्रमापनोदप्रवणं महात्मनाम् ।
सुधांशुरेष स्वयमर्ककर्कश-
प्रभाऽभितप्तामवति क्षितिं किल ॥ ४० ॥

ब्रह्मानन्दरसानुभूतिकलितैः पूतैः सुशीतैः सितैः
युष्मद्वाक्कलशोज्झितैः श्रुतिसुखैर्वाक्यामृतैः सेचय ।
सन्तप्तं भवतापदावदहनज्वालाभिरेनं प्रभो !
धन्यास्ते भवदीक्षणक्षणगतेः पात्रीकृताः स्वीकृताः॥४१॥

कथं तरेयं भवसिन्धुमेतं ?
का वा गतिर्मे ? कतमोऽस्त्युपायः ? ।
जाने न किञ्चित् कृपयाऽव मां प्रभो !
संसारदुःखक्षतिमातनुष्व ॥ ४२ ॥

तथा वदन्तं शरणागतं स्वं
संसारदावानलतापतप्तम् ।
निरीक्ष्य कारुण्यरसार्द्रदृ[1]ष्ट्या
दद्यादभीतिं सहसा महात्मा ॥ ४३ ॥

विद्वान् स तस्मा उपसत्तिमीयुषे
मुमुक्षवे साधु यथोक्तकारिणे ।
प्रशान्तचित्ताय शमान्विताय
तत्त्वोपदेशं कृपयैव कुर्यात् ॥ ४४ ॥

[1]दयार्द्रद ; सुधाभित्र.

॥ मार्गोपदेशः ॥

मा भैष्ट विद्वंस्तव नास्त्यपायः
संसारसिन्धोस्तरणेऽस्त्युपायः ।
येनैव याता यतयोऽस्य पारं
तमेव मार्गं तव निर्दिशामि ॥ ४५ ॥

अस्त्युपायो महान् कश्चित् संसारभयनाशनः ।
तेन तीर्त्वा भवाम्भोधिं परमानन्दमाप्स्यसि ॥ ४६ ॥

वेदान्तार्थविचारेण जायते ज्ञानमुत्तमम् ।
तेनात्यन्तिकसंसारदुःखनाशो भवत्यनु ॥ ४७ ॥

श्रद्धाभक्तिध्यानयोगान् मुमुक्षोः
मुक्तेर्हेतून् वक्ति साक्षात् श्रुतेर्गीः ।
यो वा एतेष्वेव तिष्ठत्यमुष्य
मोक्षोऽविद्याकल्पिताद्देहबन्धात् ॥ ४८ ॥

अज्ञानयोगात् परमात्मनस्तव
ह्यनात्मबन्धस्तत एव संसृतिः ।
तयोर्विवेकोदितबोधवह्निः
अज्ञानकार्यं प्रदहेत् समूलम् ॥ ४९ ॥

शिष्य उवाच—

कृपया श्रूयतां स्वामिन्! प्रश्नोऽयं क्रियते मया ।
यदुत्तरमहं श्रुत्वा कृतार्थः स्यां भवन्मुखात् ॥ ५० ॥

को नाम बन्धः? कथमेष आगतः?
कथं प्रतिष्ठाऽस्य? कथं विमोक्षः? ।
कोऽसावनात्मा? परमः क आत्मा?
तयोर्विवेकः कथमेतदुच्यताम् ॥ ५१ ॥

श्रीगुरुरुवाच—

धन्योऽसि कृतकृत्योऽसि पावितं ते कुलं त्वया ।
यदविद्याबन्धमुक्त्या ब्रह्मीभवितुमिच्छसि ॥ ५२ ॥

ऋणमोचनकर्तारः पितुः सन्ति सुतादयः ।
बन्धमोचनकर्ता तु स्वस्मादन्यो न कश्चन ॥ ५३ ॥

मस्तकन्यस्तभारादेः दुःखमन्यैर्निवार्यते ।
क्षुधादिकृतदुःखं तु विना स्वेन न केनचित् ॥ ५४ ॥

पथ्यमौषधसेवा च क्रियते येन रोगिणा ॥
आरोग्यसिद्धिर्दृष्टाऽस्य नान्यानुष्ठितकर्मणा ॥ ५५ ॥

वस्तुस्वरूपं स्फुटबोधचक्षुषा स्वेनैव वेद्यं ननु पण्डितेन ।
चन्द्रस्वरूपं निजचक्षुषैव ज्ञातव्यमन्यैरवगम्यते किम्? ॥५६॥

अविद्याकामकर्मादिपाशबन्धं विमोचितुम् ।
कः शक्नुयाद्विनाऽऽत्मानं कल्पकोटिशतैरपि? ॥ ५७ ॥

न योगेन न सांख्येन कर्मणा नो न विद्यया ।
ब्रह्मात्मैकत्वबोधेन मोक्षः सिद्ध्यति नान्यथा ॥ ५८ ॥

वीणाया रूपसौन्दर्यं तन्त्रीवादनसौष्ठवम् ।
प्रजारञ्जनमात्रं तन्न साम्राज्याय कल्पते ॥ ५९ ॥

वाग्वैखरी शब्दझरी शास्त्रव्याख्यानकौशलम् ।
वैदुष्यं विदुषां तद्वत् भुक्तये न तु मुक्तये ॥ ६० ॥

अविज्ञाते परे तत्त्वे शास्त्राधीतिस्तु निष्फला ।
विज्ञातेऽपि परे तत्त्वे शास्त्राधीतिस्तु निष्फला ॥ ६१ ॥

शब्दजालं महारण्यं चित्तभ्रमणकारणम् ।
अतः प्रयत्नात् ज्ञातव्यं तत्त्वज्ञात् तत्त्वमात्मनः ॥ ६२ ॥

अज्ञानसर्पदष्टस्य ब्रह्मज्ञानौषधं विना ।
किमु वेदैश्च शास्त्रैश्च? किमु मन्त्रैः किमौषधैः? ॥६३॥

न गच्छति विना पानं व्याधिरौषधशब्दतः ।
विनाऽपरोक्षानुभवं ब्रह्मशब्दैर्न मुच्यते ॥ ६४ ॥

अकृत्वा दृश्यविलयं अज्ञात्वा तत्त्वमात्मनः ।
बाह्यशब्दैः कुतो मुक्तिः ? उक्तिमात्रफलैर्नृणाम् ॥ ६५ ॥

अकृत्वा शत्रुसंहारमगत्वाऽखिलभूश्रियम् ।
राजाऽहमिति शब्दान्नो राजा भवितुमर्हति ॥ ६६ ॥

आप्तोक्तिं खननं तथोपरिशिलाद्युत्कर्षणं स्वीकृतिं
निक्षेपः समपेक्षते न हि बहिः शब्दैस्तु निर्गच्छति ।
तद्वद् ब्रह्मविदोपदेशमननध्यानादिभिर्लभ्यते
मायाकार्यतिरोहितं स्वममलं तत्त्वं न दुर्युक्तिभिः ॥ ६७

तस्मात् सर्वप्रयत्नेन भवबन्धविमुक्तये ।
स्वैरेव यत्नः कर्तव्यो रोगादेरिव पण्डितैः ॥ ६८ ॥

यस्त्वयाऽद्य कृतः प्रश्नो वरीयाञ्छास्त्रविन्मतः ।
सूत्रप्रायो निगूढार्थो ज्ञातव्यश्च मुमुक्षुभिः ॥ ६९ ॥

शृणुष्वावहितो विद्वन् ! यन्मया समुदीर्यते ।
तदेतच्छ्रवणात् सद्यो भवबन्धाद्विमोक्ष्यसे ॥ ७० ॥

॥ मो क्ष हे त वः ॥

मोक्षस्य हेतुः प्रथमो निगद्यते
वैराग्यमत्यन्तमनित्यवस्तुषु ।
ततः शमश्चापि दमस्तितिक्षा
न्यासः प्रसक्ताखिलकर्मणां भृशम् ॥ ७१ ॥

ततः श्रुतिस्तन्मननं सतत्त्वध्यानं चिरं नित्यनिरन्तरं मुनेः ।
ततोऽविकल्पं परमेत्य विद्वान् इहैव निर्वाणसुखं समृच्छति॥७२

॥ आ त्मा ना त्म वि वे च न म् ॥

यद् बोद्धव्यं तवेदानीमात्मानात्मविवेचनम् ।
तदुच्यते मया सम्यक् श्रुत्वाऽऽत्मन्यवधारय ॥ ७३ ॥

## ॥ स्थूलशरीरम् ॥

मज्जाऽस्थिमेदःपलरक्तचर्मत्वगाह्वयैर्धातुभिरेभिरन्वितम् ।
पादोरुवक्षोभुजपृष्ठमस्तकैः अङ्गैरुपाङ्गैरुपयुक्तमेतत् ॥ ७४ ॥

अहं ममेति प्रथितं शरीरं मोहास्पदं स्थूलमितीर्यते बुधैः ।
नभोनभस्वद्दहनाम्बुभूमयः सूक्ष्माणि भूतानि भवन्ति तानि ॥

परस्परांशैर्मिलितानि भूत्वा स्थूलानि च स्थूलशरीरहेतवः ।
मात्रास्तदीया विषया भवन्ति शब्दादयः पञ्च सुखाय भोक्तुः ॥

य एषु मूढा विषयेषु बद्धा रागोरुपाशेन सुदुर्दमेन ।
आयान्ति निर्यान्त्यध ऊर्ध्वमुच्चैः स्वकर्मदूतेन जवेन नीताः ॥७७

शब्दादिभिः पञ्चभिरेव पञ्च पञ्चत्वमापुः स्वगुणेन बद्धाः ।
कुरङ्ग[1]मातङ्गपतङ्गमीनभृङ्गा[2] नरः पञ्चभिरञ्चितः किम् ? ॥७८

दोषेण तीव्रो विषयः कृष्णसर्पविषादपि ।
विषं निहन्ति भोक्तारं द्रष्टारं चक्षुषाऽप्ययम् ॥ ७९ ॥

[विषयाशामहापाशात् यो विमुक्तः सुदुस्त्यजात् ।
स एव कल्पते मुक्त्यै नान्यः षट्शास्त्रवेद्यपि ॥ ८० ॥

आपातवैराग्यवतो मुमुक्षून्
    भवाब्धिपारं प्रतियातुमुद्यतान् ।
आशाग्रहो मज्जयतेऽन्तराले
    निगृह्य कण्ठे विनिवर्त्य वेगात् ॥ ८१ ॥

विषयाख्यग्रहो येन सुविरक्त्यसिना हतः ।
स गच्छति भवाम्भोधेः पारं प्रत्यूहवर्जितः ॥ ८२ ॥]

विषमविषयमार्गे गच्छतोऽनच्छबुद्धेः
    प्रतिपदमभिघातो मृत्युरप्येष सिद्धः ।

---

[1]भुजङ्ग. [2]मृगा.

हितसुजनगुरूक्त्या गच्छतः स्वस्य युक्त्या
प्रभवति फलसिद्धिः सत्यमित्येव विद्धि ॥ ८३ ॥

मोक्षस्य काङ्क्षा यदि वा[1] तवास्ति
त्यजातिदूरे विषयान्[2] विषं यथा ।
पीयूषवत्तोषदयाक्षमाऽऽर्जव-
प्रशान्तिदान्तीर्भज नित्यमादरात् ॥ ८४ ॥

अन्वीक्षणं[3] यत्परिहृत्य कृत्यं अनाद्यविद्याकृतबन्धमोक्षणम् ।
देहः परार्थोऽयममुष्य पोषणे यः सज्जते स स्वमनेन हन्ति ॥८५

शरीरपोषणार्थी सन् य आत्मानं दिदृक्षति ।
ग्राहं दारुधिया धृत्वा नदीं तर्तुं स इच्छति ॥ ८६ ॥

[मोह एव महामृत्युः मुमुक्षोर्वपुरादिषु ।
मोहो विनिर्जितो येन स मुक्तिपदमर्हति ॥ ८७ ॥]

मोहं जहि महामृत्युं देहदारसुतादिषु ।
यं जित्वा मुनयो यान्ति तद्विष्णोः परमं पदम् ॥ ८८ ॥

त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंकुलम् ।
पूर्णं मूत्रपुरीषाभ्यां स्थूलं निन्द्यमिदं वपुः ॥ ८९ ॥

पञ्चीकृतेभ्यो भूतेभ्यः स्थूलेभ्यः पूर्वकर्मणा ।
समुत्पन्नमिदं स्थूलं भोगायतनमात्मनः ।
अवस्था जागरस्तस्य स्थूलार्थानुभवो यतः ॥ ९० ॥

बाह्येन्द्रियैः स्थूलपदार्थसेवां
स्रक्चन्दनस्त्र्यादिविचित्ररूपाम् ।
करोति जीवः स्वयमेतदात्मना
तस्मात् प्रशस्ति[4]र्वपुषोऽस्य जागरे ॥ ९१ ॥

---

[1]यदि चेत्. [2]त्यज्या विदूराद्विषयाः. [3]अनुक्षण. [4]प्रतीति, प्रवृत्ति.

सर्वोऽपि बाह्यः संसारः पुरुषस्य यदाश्रयः ।
विद्धि देहमिदं स्थूलं गृहवत् गृहमेधिनः ॥ ९२ ॥

स्थूलस्य सम्भवजरामरणानि धर्माः
स्थौल्यादयो बहुविधाः शिशुताद्यवस्थाः ।
वर्णाश्रमादिनियमा बहुधाऽऽमयाः[1]स्युः
पूजावमानबहुमानमुखा विशेषाः ॥ ९३ ॥

॥ सूक्ष्म शरीरम् ॥

बुद्धीन्द्रियाणि श्रवणं त्वगक्षि घ्राणं च जिह्वा विषयावबोधनात् ।
वाक्पाणिपादा गुदमप्युपस्थं कर्मेन्द्रियाणि प्रवणेन कर्मसु ॥

निगद्यतेऽन्तःकरणं मनो धीः
अहंकृतिश्चित्तमिति स्ववृत्तिभिः ।
मनस्तु संकल्पविकल्पनादिभिः
बुद्धिः पदार्थाध्यवसायधर्मतः ॥ ९५ ॥

अत्राभिमानादहमित्यहंकृतिः
स्वार्थानुसन्धानगुणेन चित्तम ॥ ९६ ॥

प्राणापानव्यानोदानसमाना भवत्यसौ प्राणः ।
स्वयमेव• वृत्तिभेदात् विकृतिभेदात् सुवर्णसलिलादिवत् ॥

वागादि पञ्च श्रवणादि पञ्च
प्राणादि पञ्चाभ्रमुखानि पञ्च ।
बुद्ध्याद्यविद्याऽपि च कामकर्मणी
पुर्यष्टकं सूक्ष्मशरीरमाहुः ॥ ९८ ॥

इदं शरीरं शृणु सूक्ष्मसंज्ञितं
लिङ्गं त्वपञ्चीकृतभूतसम्भवम् ।

[1] धा यमाः

सवासनं कर्मफलानुभावकं
स्वाज्ञानतोऽनादिरुपाधिरात्मनः ॥ ९९ ॥

स्वप्नो भवत्यस्य विभक्त्यवस्था
स्वमात्रशेषेण विभाति यत्र ।
स्वप्ने तु बुद्धिः स्वयमेव जाग्रत्-
कालीननानाविधवासनाभिः ॥ १०० ॥

कर्त्रादिभावं प्रतिपद्य राजते
यत्र स्वयंज्योतिरयं परात्मा ।
धीमात्रकोपाधिरशेषसाक्षी
न लिप्यते तत्कृतकर्मलेपैः ।

यस्मादसङ्गस्तत एव कर्मभिः
न लिप्यते किंचिदुपाधिना कृतैः ॥ १०१ ॥

सर्वव्यापृतिकरणं लिङ्गमिदं स्याच्चिदात्मनः पुंसः ।
वास्यादिकमिव तक्ष्णः तेनैवात्मा भवत्यसङ्गोऽयम् ॥ १०२ ॥

अन्धत्वमन्दत्वपटुत्वधर्माः
सौगुण्यवैगुण्यवशाद्धि चक्षुषः ।
बाधिर्यमूकत्वमुखास्तथैव
श्रोत्रादिधर्मा न तु वेत्तुरात्मनः ॥ १०३ ॥

उच्छ्वासनिश्वासविजृम्भणक्षुत्-
प्रस्पन्दनाद्युत्क्रमणादिकाः क्रियाः ।
प्राणादिकर्माणि वदन्ति तज्ज्ञाः
प्राणस्य धर्मावशनापिपासे ॥ १०४ ॥

अन्तःकरणमेतेषु चक्षुरादिषु वर्ष्मणि ।
अहमित्यभिमानेन तिष्ठत्याभासतेजसा ॥ १०५ ॥

अहङ्कारः स विज्ञेयः कर्ता भोक्ताऽभिमान्ययम् ।
सत्त्वादिगुणयोगेनावस्थात्रितयमश्नुते ॥ १०६ ॥

विषयाणामानुकूल्ये सुखी दुःखी विपर्यये ।
सुखं दुःखं च तद्धर्मः सदानन्दस्य नात्मनः ॥ १०७ ॥

आत्मार्थत्वेन हि प्रेयान् विषयो न स्वतः प्रियः ।
स्वत एव हि सर्वेषामात्मा प्रियतमो यतः ॥ १०८ ॥

तत आत्मा सदानन्दो नास्य दुःखं कदाचन ।
यत् सुषुप्तौ निर्विषय आत्मानन्दोऽनुभूयते ।
श्रुतिः प्रत्यक्षमैतिह्यमनुमानं च जाग्रति ॥ १०९ ॥

॥ कारणशरीरम् ॥

अव्यक्तनाम्नी परमेशशक्तिः
अनाद्यविद्या त्रिगुणात्मिका परा ।
कार्यानुमेया सुधियैव माया
यया जगत्सर्वमिदं प्रसूयते ॥ ११० ॥

सन्नाप्यसन्नाप्युभयात्मिका नो
भिन्नाऽप्यभिन्नाऽप्युभयात्मिका नो ।
साङ्गाऽप्यनङ्गाऽप्युभयात्मिका नो
महाद्भुताऽनिर्वचनीयरूपा ॥ १११ ॥

शुद्धाद्वयब्रह्मविबोधनाश्या
सर्पभ्रमो रज्जुविवेकतो यथा ।
रजस्तमः सत्त्वमिति प्रसिद्धाः
गुणास्तदीयाः प्रथितैः स्वकार्यैः ॥ ११२ ॥

विक्षेपशक्ती रजसः क्रियात्मिका
यतः प्रवृत्तिः प्रसृता पुराणी ।

रागादयोऽस्याः प्रभवन्ति नित्यं
दुःखादयो ये मनसो विकाराः ॥ ११३ ॥

कामः क्रोधो लोभदम्भाद्यसूया-
ऽहङ्कारेर्ष्यामत्सराद्यास्तु घोराः ।
धर्मा एते राजसाः पुंप्रवृत्ति-
र्यस्मादेषा तद्रजो बन्धहेतुः ॥ ११४ ॥

एषाऽऽवृतिर्नाम तमोगुणस्य
शक्तिर्यया वस्त्ववभासतेऽन्यथा ।
सैषा निदानं पुरुषस्य संसृतेः
विक्षेपशक्तेः प्रसरस्य¹ हेतुः ॥ ११५ ॥

प्रज्ञावानपि पण्डितोऽपि चतुरोऽप्यत्यन्तसूक्ष्मार्थदृक्
व्यालीढस्तमसा न वेत्ति बहुधा संबोधितोऽपि स्फुटम् ।
भ्रान्त्यारोपितमेव साधु कलयत्यालम्बनं तद्गुणान्
हन्तासौ प्रबला दुरन्ततमसः शक्तिर्महत्यावृतिः ॥ ११६ ॥

अभावना वा विपरीतभावना-
सम्भावना विप्रतिपत्तिरस्याः ।
संसर्गयुक्तं न विमुञ्चति ध्रुवं
विक्षेपशक्तिः क्षपयत्यजस्रम् ॥ ११७ ॥

अज्ञानमालस्यजडत्वनिद्रा-
प्रमादमूढत्वमुखास्तमोगुणाः ।
एतैः प्रयुक्तो न हि वेत्ति किञ्चित्
निद्रालुवत् स्तम्भवदेव तिष्ठति ॥ ११८ ॥

सत्त्वं विशुद्धं जलवत् तथाऽपि
ताभ्यां मिलित्वा सरणाय कल्पते ।

¹ प्रसरणस्य.

यत्रात्मबिम्बः प्रतिबिम्बितः सन्
प्रकाशयत्यर्क इवाखिलं जडम् ॥ ११९ ॥

मिश्रस्य सत्त्वस्य भवन्ति धर्मा-
स्त्वमानिताद्या नियमा यमाद्याः ।
श्रद्धा च भक्तिश्च मुमुक्षुता च
दैवी च सम्पत्तिरसन्निवृत्तिः ॥ १२० ॥

विशुद्धसत्त्वस्य गुणाः प्रसादः
स्वात्मानुभूतिः परमा प्रशान्तिः ।
तृप्तिः प्रहर्षः परमात्मनिष्ठा
यया सदानन्दरसं समृच्छति ॥ १२१ ॥

अव्यक्तमेतत्त्रिगुणैर्निरुक्तं
तत्कारणं नाम शरीरमात्मनः ।
सुषुप्तिरेतस्य विभक्त्यवस्था
प्रलीनसर्वेन्द्रियबुद्धिवृत्तिः ॥ १२२ ॥

सर्वप्रकारप्रमितिप्रशान्ति-
र्बीजात्मनाऽवस्थितिरेव बुद्धेः ।
सुषुप्तिरेतस्य किल प्रतीतिः
किंचिन्न वेद्मीति जगत्प्रसिद्धेः ॥ १२३ ॥

देहेन्द्रियप्राणमनोऽहमादयः
सर्वे विकारा विषयाः सुखादयः ।
व्योमादिभूतान्यखिलं च विश्व-
मव्यक्तपर्यन्तमिदं ह्यनात्मा ॥ १२४ ॥

माया मायाकार्यं सर्वं महदादि देहपर्यन्तम् ।
असदिदमनात्मतत्त्वं विद्धि त्वं मरुमरीचिकाकल्पम् ॥१२५॥

## ॥ परमात्मा ॥

अथ ते संप्रवक्ष्यामि स्वरूपं परमात्मनः ।
यद्विज्ञाय नरो बन्धात् मुक्तः कैवल्यमश्नुते ॥ १२६ ॥

अस्ति कश्चित् स्वयं नित्यं अहंप्रत्ययलम्बनः ।
अवस्थात्रयसाक्षी सन् पञ्चकोशविलक्षणः ॥ १२७ ॥

यो विजानाति सकलं जाग्रत्स्वप्नसुषुप्तिषु ।
बुद्धितद्वृत्तिसद्भावं अभावमहमित्ययम् ॥ १२८ ॥

यः पश्यति स्वयं सर्वं यं न पश्यति कश्चन ।
यश्चेतयाति बुद्ध्यादि न तद्यं चेतयत्ययम् ॥ १२९ ॥

येन विश्वमिदं व्याप्तं यं न व्याप्नोति किञ्चन ।
अभारूपमिदं मर्वं यं भान्तमनुभात्ययम् ॥ १३० ॥

यस्य सन्निधिमात्रेण देहेन्द्रियमनोधियः ।
विषयेषु स्वकीयेषु वर्तन्ते प्रेरिता इव ॥ १३१ ॥

अहङ्कारादिदेहान्ता विषयाश्च सुखादयः ।
वेद्यन्ते घटवत् येन नित्यबोधस्वरूपिणा ॥ १३२ ॥

एषोऽन्तरात्मा पुरुषः पुराणो
निरन्तराखण्डसुखानुभूतिः ।
सदैकरूपः प्रतिबोधमात्रो
येनेपिता वागसवश्चरन्ति ॥ १३३ ॥

अत्रैव सत्त्वात्मनि धीगुहायां
अव्याकृताकाश उरुप्रकाशः ।
आकाश उच्चैः रविवत् प्रकाशते
स्वतेजसा विश्वमिदं प्रकाशयन् ॥ १३४ ॥

ज्ञाता मनोऽहङ्कृतिविक्रियाणां
देहेन्द्रियप्राणकृतक्रियाणाम् ।
अयोऽग्निवत्ताननु वर्तमानो
न चेष्टते नो विकरोति किञ्चन ॥ १३५ ॥

न जायते नो म्रियते न वर्धते
न क्षीयते नो विकरोति नित्यः ।
विलीयमानेऽपि वपुष्यमुष्मिन्
न लीयते कुम्भ इवाम्बरं स्वयम् ॥ १३६ ॥

प्रकृतिविकृतिभिन्नः शुद्धबोधस्वभावः
सदसदिदमशेषं भासयन्निर्विशेषः ।
विलसति परमात्मा जाग्रदादिष्ववस्था-
स्वहमहमिति साक्षात् साक्षिरूपेण बुद्धेः ॥ १३७ ॥

नियमितमनसाऽमुं त्वं स्वमात्मानमात्म-
न्ययमहमिति साक्षाद्विद्धि बुद्धिप्रसादात् ।
जनिमरणतरङ्गापारसंसारसिन्धुं
प्रतर भव कृतार्थो ब्रह्मरूपेण संस्थः ॥ १३८ ॥

॥ बन्धः ॥

अत्रानात्मन्यहमिति मतिर्बन्ध एषोऽस्य पुंसः
प्राप्तोऽज्ञानाज्जननमरणक्लेशसंपातहेतुः ।
येनैवायं वपुरिदमसत् सत्यमित्यात्मबुद्ध्या
पुष्यत्युक्षत्यवति विषयैस्तन्तुभिः कोशकृद्वत् ॥ १३९॥

अतस्मिंस्तद्बुद्धिः प्रभवति विमूढस्य तमसा
विवेकाभावाद्वै स्फुरति भुजगे रज्जुधिषणा ।
ततोऽनर्थव्रातो निपतति समादातुरधिकः
ततो योऽसद्ग्राहः स हि भवति बन्धः शृणु सखे ! ॥१४०

अखण्डनित्याव्ययबोधशक्त्या
स्फुरन्तमात्मानमनन्तवैभवम् ।
समावृणोत्यावृतिशक्तिरेषा
तमोमयी राहुरिवार्कबिम्बम् ॥ १४१ ॥

तिरोभूते स्वात्मन्यमलतरतेजोवति पुमान्
अनात्मानं मोहादहमिति शरीरं कलयति ।
ततः कामक्रोधप्रभृतिभिरमुं बन्धकगुणैः
परं विक्षेपाख्या रजस उरुशक्तिर्व्यथयति ॥ १४२ ॥

महामोहग्राहग्रसनगलितात्मावगमनो
धियो नानावस्थाः स्वयमभिनयंस्तद्गुणतया ।
अपारे संसारे विषयविषपूरे जलनिधौ
निमज्ज्योन्मज्ज्यायं भ्रमति कुमतिः कुत्सितगतिः ॥ १४३ ॥

भानुप्रभासञ्जनिताभ्रपङ्क्ति-
र्भानुं तिरोधाय यथा विजृम्भते ।
आत्मोदिताहङ्कृतिरात्मतत्त्वं
तथा तिरोधाय विजृम्भते स्वयम् ॥ १४४ ॥

कवलितदिननाथे दुर्दिने सान्द्रमेघैः
व्यथयति हिमझञ्झावायुरुग्रो यथैतान् ।
अविरततमसाऽऽत्मन्यावृते न[illegible]द्धिं
क्षपयति बहुदुःखैस्तीव्रविक्षेपशक्तिः ॥ १४५ ॥

एताभ्यामेव शक्तिभ्यां बन्धः पुंसः समागतः ।
याभ्यां विमोहितो देहं मत्वाऽऽत्मानं भ्रमत्ययम् ॥ १४६ ॥

बीजं संसृतिभूमिजस्य तु तमो देहात्मधीरङ्कुरो
रागः पल्लवमम्बु कर्म तु वपुः स्कन्धोऽसवः शाखिकाः ।

अग्राणीन्द्रियसंहतिश्च विषयाः पुष्पाणि दुःखं फलं
नानाकर्मसमुद्भवं बहुविधं भोक्ताऽत्र जीवः खगः ॥१४७॥

अज्ञानमूलोऽयमनात्मबन्धो
नैसर्गिकोऽनादिरनन्त ईरितः ।
जन्माप्ययव्याधिजरादिदुःख-
प्रवाहतापं जनयत्यमुष्य ॥ १४८ ॥

॥ बन्धमो[illegible]कः ॥

नास्त्रैर्न शस्त्रैरनिलेन वह्निना
छेत्तुं न शक्यो न च कर्मकोटिभिः ।
विवेकविज्ञानमहासिना विना
धातुः प्रसादेन शितेन मञ्जुना ॥ १४९ ॥

श्रुतिप्रमाणैकमतेः स्वधर्म-
निष्ठा तयैवात्मविशुद्धिरस्य ।
विशुद्धबुद्धेः परमात्मवेदनं
तेनैव संसारसमूलनाशः ॥ १५० ॥

कोशैरन्नमयाद्यैः पञ्चभिरात्मा न संवृतो भाति ।
निजशक्तिसमुत्पन्नैः शैवालपटलैरिवाम्बु वापीस्थम् ॥ १५१॥

तच्छैवालापनये सम्यक् सलिलं प्रतीयते शुद्धम् ।
तृष्णासन्तापहरं सद्यः सौख्यप्रदं परं पुंसः ॥ १५२ ॥

पञ्चानामपि कोशानां अपवादे विभात्ययं शुद्धः ।
नित्यानन्दैकरसः प्रत्यग्रूपः परः स्वयंज्योतिः ॥ १५३ ॥

आत्मानात्मविवेकः कर्तव्यो बन्धमुक्तये विदुषा ।
तेनैवानन्दी भवति स्वं विज्ञाय सच्चिदानन्दम् ॥ १५४ ॥

मुञ्जादिषीकामिव दृश्यवर्गात्
प्रत्यञ्चमात्मानमसङ्गमक्रियम् ।

विविच्य तत्र प्रविलाप्य सर्वं
तदात्मना तिष्ठति यः स मुक्तः ॥ १५५ ॥

॥ अन्नमयकोशविवेकः ॥

देहोऽयमन्नभवनोऽन्नमयस्तु कोशो
ह्यन्नेन जीवति विनश्यति तद्विहीनः ।
त्वक्चर्ममांसरुधिरास्थिपुरीषराशिः
नायं स्वयं भवितुमर्हति नित्यशुद्धः ॥ १५६ ॥

पूर्वं जनेरपि मृतेरथ नायमस्ति
जातक्षणः क्षण[1]गुणोऽनियतस्वभावः ।
नैको जडश्च घटवत् परिदृश्यमानः
स्वात्मा कथं भवति भावविकारवेत्तुः[2] ॥ १५७ ॥

पाणिपादादिमान् देहो नात्मा व्यङ्गेऽपि जीवनात् ।
तत्तच्छक्तेरनाशाच्च न नियम्यो नियामकः ॥ १५८ ॥

देहतद्धर्मतत्कर्मतदवस्थादिसाक्षिणः ।
[स्वत एव स्वतः सिद्धं तद्वैलक्षण्यमात्मनः ॥ १५९ ॥]

शल्यराशिर्मांसलिप्तो मलपूर्णोऽतिकश्मलः ।
कथं भवेदयं वेत्ता स्वयमेतद्विलक्षणः ॥ १६० ॥

त्वङ्मांसमेदोऽस्थिपुरीषराशौ
अहंमतिं मूढजनः करोति ।
विलक्षणं वेत्ति विचारशीलो
निजस्वरूपं परमार्थभूतम् ॥ १६१ ॥

देहोऽहमित्येव जडस्य बुद्धिः
देहे च जीवे विदुषस्त्वहंधीः ।

[1]जातक्षणक्षण, जातःक्षणक्षण. [2]वेत्ता.

विवेकविज्ञानवतो महात्मनो
ब्रह्माहमित्येव मतिः सदात्मनि ॥ १६२ ॥

अत्रात्मबुद्धिं त्यज मूढबुद्धे !
त्वङ्मांसमेदोऽस्थिपुरीषराशौ ।
सर्वात्मनि ब्रह्मणि निर्विकल्पे
कुरुष्व शान्तिं परमां भजस्व ॥ १६३ ॥

देहेन्द्रियादावसति भ्रमोदितां
विद्वानहन्तां न जहाति यावत् ।
तावन्न तस्यास्ति विमुक्तिवार्ता-
ऽप्यस्त्वेव वेदान्तनयान्तदर्शी ॥ १६४ ॥

छायाशरीरे प्रतिबिम्बगात्रे
यत्स्वप्नदेहे हृदि कल्पिताङ्गे ।
यथाऽऽत्मबुद्धिस्तव नास्ति काचित्
जीवच्छरीरे च[1] तथैव माऽस्तु ॥ १६५ ॥

देहात्मधीरेव नृणामसद्धियां
जन्मादिदुःखप्रभवस्य बीजम् ।
यतस्ततस्त्वं जहि तां प्रयत्नात्
त्यक्ते तु चित्ते न पुनर्भवाशा ॥ १६६ ॥

॥ प्रा ण म य को श वि वे कः ॥

कर्मेन्द्रियैः पञ्चभिरञ्चितोऽयं
प्राणो भवेत् प्राणमयस्तु कोशः ।
येनात्मवानन्नमयोऽनुपूर्णः
प्रवर्ततेऽसौ सकलक्रियासु ॥ १६७ ॥

---

[1] जीवच्छवेऽस्मिश्च.

नैवात्माऽपि प्राणमयो वायुविकारो
गन्ताऽऽगन्ता वायुवदन्तर्बहिरेषः ।
यस्मात् किञ्चित् क्वाऽपि न वेत्तीष्टमनिष्टं
स्वं वाऽन्यं वा किञ्चन नित्यं परतन्त्रः ॥ १६८ ॥

॥ म नो म य को श वि वे कः ॥

ज्ञानेन्द्रियाणि च मनश्च मनोमयः स्यात्
कोशो ममाहमिति वस्तुविकल्पहेतुः ।
संज्ञादिभेदकलनाकलितो बलीयान्
तत्पूर्वकोशमभिपूर्य विजृम्भते यः ॥ १६९ ॥

पञ्चेन्द्रियैः पञ्चभिरेव होतृभिः
प्रचीयमानो विषयाज्यधारया ।
जाज्वल्यमानो बहुवासनेन्धनैः
मनोमयोऽग्निर्दहति प्रपञ्चम् ॥ १७० ॥

न ह्यस्त्यविद्या मनसोऽतिरिक्ता
मनो ह्यविद्या भवबन्धहेतुः ।
तस्मिन् विनष्टे सकलं विनष्टं
विजृम्भितेऽस्मिन् सकलं विजृम्भते ॥ १७१ ॥

स्वप्नेऽर्थशून्ये सृजति स्वशक्त्या
भोक्त्रादि विश्वं मन एव सर्वम् ।
तथैव जाग्रत्यपि नो विशेषं
तत् सर्वमेतन्मनसो विजृम्भणम् ॥ १७२ ॥

सुषुप्तिकाले मनसि प्रलीने
नैवास्ति किञ्चित् सकलप्रसिद्धेः ।
अतो मनःकल्पित एव पुंसः
संसार एतस्य न वस्तुतोऽस्ति ॥ १७३ ॥

---

[1]मात्म. [2]मभिपूर्य.

वायुनाऽऽनीयते मेघः पुनस्तेनैव लीयते ।
मनसा कल्प्यते वन्धो मोक्षस्तेनैव कल्प्यते ॥ १७४ ॥

देहादिसर्वविषये परिकल्प्य रागं
वध्नाति तेन पुरुषं पशुवद्गुणेन ।
वैरस्यमत्र विषवत् सुविधाय पश्चात्
एनं विमोचयति तन्मन एव वन्धात् ॥ १७५ ॥

तस्मान्मनः कारणमस्य जन्तोः
वन्धस्य मोक्षस्य च वा विधाने ।
वन्धस्य हेतुर्मलिनं रजोगुणैः
मोक्षस्य शुद्धं विरजस्तमस्कम्[1] ॥ १७६ ॥

विवेकवैराग्यगुणातिरेकात्
शुद्धत्वमासाद्य मनो विमुक्त्यै ।
भवत्यतो वुद्धिमतो मुमुक्षोः
ताभ्यां दृढाभ्यां भवितव्यमग्रे ॥ १७७ ॥

मनो नाम महाव्याघ्रो विषयारण्यभूमिषु ।
चरत्यत्र न गच्छन्तु साधवो ये मुमुक्षवः ॥ १७८ ॥

मनः प्रसूते विषयानशेषान्
स्थूलात्मना सूक्ष्मतया च भोक्तुः ।
शरीरवर्णाश्रमजातिभेदान्
गुणक्रियाहेतुफलानि नित्यम् ॥ १७९ ॥

असङ्गचिद्रूपममुं विमोह्य देहेन्द्रियप्राणगुणैर्निवध्य ।
अहं ममेति भ्रमयत्यजस्रं मनः स्वकृत्येषु फलोपभुक्तिषु ॥१८०॥

अध्यासदोषात् पुरुषस्य संसृतिः
अध्यासवन्धस्त्वमुनैव कल्पितः ।

[1] विरजोतमस्कम्.

रजस्तमोदोषवतोऽविवेकिनो
जन्मादिदुःखस्य निदानमेतत् ॥ १८१ ॥
अतः प्राहुर्मनोऽविद्यां पण्डितास्तत्त्वदर्शिनः ।
येनैव भ्राम्यते विश्वं वायुनेवाभ्रमण्डलम् ॥ १८२ ॥
तन्मनःशोधनं कार्यं प्रयत्नेन मुमुक्षुणा ।
विशुद्धे सति चैतस्मिन् मुक्तिः करतला[1]यते ॥ १८३ ॥
मोक्षैकसक्त्या विषयेषु रागं
निर्मूल्य संन्यस्य च सर्वकर्म ।
सच्छ्रद्धया यः श्रवणादिनिष्ठो
रजःस्वभावं स धुनोति बुद्धेः ॥ १८४ ॥
*मनोमयो नापि भवेत् परात्मा*
*ह्याद्यन्तवत्त्वात् परिणामिभावात् ।*
*दुःखात्मकत्वाद्विषयत्वहेतोः*
*द्रष्टा हि दृश्यात्मतया न दृष्टः ॥ १८५ ॥*

॥ विज्ञानमयकोशविवेकः ॥

बुद्धिर्बुद्धीन्द्रियैः सार्द्धं सवृत्तिः कर्तृलक्षणः ।
विज्ञानमयकोशः स्यात् पुंसः संसारकारणम् ॥ १८६ ॥
अनुव्रजच्चित्प्रतिबिम्बशक्तिः
विज्ञानसंज्ञः प्रकृतेर्विकारः ।
ज्ञानक्रियावानहमित्यजस्रं
देहेन्द्रियादिष्वभिमन्यते भृशम् ॥ १८७ ॥
अनादिकालोऽयमहंस्वभावो
जीवः समस्तव्यवहारवोढा ।
करोति कर्माण्यनुपूर्ववासनः
पुण्यान्यपुण्यानि च तत्फलानि ॥ १८८ ॥

---
[1] करतला.

भुङ्क्ते विचित्रास्वपि योनिषु व्रजन्
आयाति निर्यात्यध ऊर्ध्वमेषः ।
अस्यैव विज्ञानमयस्य जाग्रत्
स्वप्नाद्यवस्थाः सुखदुःखभोगः ॥ १८९ ॥

देहादिनिष्ठाश्रमधर्मकर्मगुणाभिमानः सततं ममेति ।
विज्ञानकोशोऽयमतिप्रकाशः प्रकृष्टसान्निध्यवशात् परात्मनः ।
अतो भवत्येष उपाधिरस्य यदात्मधीः संसरति भ्रमेण ॥१९०॥

योऽयं विज्ञानमयः प्राणेषु हृदि स्फुरत्स्वयंज्योतिः ।
कूटस्थः सन्नात्मा कर्ता भोक्ता भवत्युपाधिस्थः ॥ १९१ ॥

स्वयं परिच्छेदमुपेत्य बुद्धेः
तादात्म्यदोषेण परं मृषात्मनः ।
सर्वात्मकः सन्नपि वीक्षते स्वयं
स्वतः पृथक्त्वेन मृदो घटानिव ॥ १९२ ॥

उपाधिसम्बन्धवशात् परात्मा
ह्युपाधिधर्माननुभाति तद्गुणः ।
अयोविकारानविकारिवह्निवत्
सदैकरूपोऽपि परः स्वभावात् ॥ १९३ ॥

॥ अ ना द्य वि द्या ना शो प प त्तिः ॥

शिष्य उवाच—

भ्रमेणाप्यन्यथा वाऽस्तु जीवभावः परात्मनः ।
तदुपाधेरनादित्वात् नानादेर्नाश इष्यते ॥ १९४ ॥

अतोऽस्य जीवभावोऽपि नित्यो भवति संसृतिः ।
न निवर्तेत, तन्मोक्षः कथं ? मे श्रीगुरो वद ॥ १९५ ॥

श्रीगुरुरुवाच—

सम्यक् पृष्टं त्वया विद्वन्! सावधानेन तच्छृणु ।
प्रामाणिकी न भवति भ्रान्त्या मोहितकल्पना ॥ १९६ ॥

भ्रान्तिं विना त्वसङ्गस्य निष्क्रियस्य निराकृतेः ।
न घटेतार्थसम्बन्धो नभसो नीलतादिवत् ॥ १९७ ॥

स्वस्य द्रष्टुर्निर्गुणस्याक्रियस्य
प्रत्यग्बोधानन्दरूपस्य बुद्धेः ।
भ्रान्त्या प्राप्तो जीवभावो न सत्यो
मोहापाये नास्त्यवस्तु स्वभावात् ॥ १९८ ॥

यावद्भ्रान्तिस्तावदेवास्य सत्ता
मिथ्याज्ञानोज्जृम्भितस्य प्रमादात् ।
रज्ज्वां सर्पो भ्रान्तिकालीन एव
भ्रान्तेर्नाशे नैव सर्पोऽस्ति तद्वत् ॥ १९९ ॥

अनादित्वमविद्यायाः कार्यस्यापि तथेष्यते ।
उत्पन्नायां तु विद्यायां आविद्यकमनाद्यपि ।
प्रबोधे स्वप्नवत् सर्वं सहमूलं विनश्यति ॥ २०० ॥

अनाद्यपीदं नो नित्यं प्रागभाव इव स्फुटम ।
अनादेरपि विध्वंसः प्रागभावस्य वीक्षितः ॥ २०१ ॥

यद्बुद्ध्युपाधिसम्बन्धात् परिकल्पितमात्मनि ।
जीवत्वं न ततोऽन्यत्तु स्वरूपेण विलक्षणम् ॥ २०२ ॥

सम्बन्धः स्वात्मनो बुद्ध्या मिथ्याज्ञानपुरःसरः ।
विनिवृत्तिर्भवेत्तस्य सम्यग्ज्ञानेन नान्यथा ॥ २०३ ॥

ब्रह्मात्मैकत्वविज्ञानं सम्यग्ज्ञानं श्रुतेर्मतम् ।
तदात्मानात्मनोः सम्यग्विवेकेनैव सिद्ध्यति ॥ २०४ ॥

ततो विवेकः कर्तव्यः प्रत्यगात्मासदात्मनोः ।
जलं पङ्कवदत्यन्तं पङ्कापाये जलं स्फुटम् ॥ २०५ ॥
[यथा भाति तथाऽऽत्माऽपि दोषाभावे स्फुटप्रभः ।]

असन्निवृत्तौ तु सदात्मना स्फुटं
प्रतीतिरेतस्य भवेत् प्रतीचः ।
ततो निरासः करणीय एव
सदात्मनः साध्वहमादिवस्तुनः ॥ २०६ ॥

अतो नायं परात्मा स्यात् विज्ञानमयशब्दभाक् ॥ २०७ ॥

विकारित्वाज्जडत्वाच्च परिच्छिन्नत्वहेतुनः ।
दृश्यत्वात् व्यभिचारित्वात् नानित्यो नित्य इष्यते ॥ २०८॥

॥ आ न न्द म य को श वि वे कः ॥

आनन्दप्रतिबिम्बचुम्बिततनुर्वृत्तिस्तमोजृम्भिता
स्यादानन्दमयः प्रियादिगुणकः स्वेष्टार्थलाभोदयः ।
पुण्यस्यानुभवे विभाति कृतिनामानन्दरूपः स्वयं
भूत्वा नन्दति यत्र साधु तनुभृन्मात्रः प्रयत्नं विना ॥२०९॥

आनन्दमयकोशस्य सुषुप्तौ स्फूर्तिरुत्कटा ।
स्वप्नजागरयोरीषत् इष्टसन्दर्शनादिना ॥ २१० ॥

नैवायमानन्दमयः परात्मा
सोपाधिकत्वात् प्रकृतेर्विकारात् ।
कार्यत्वहेतोः सुकृतक्रियायाः
विकारसङ्घातसमाहितत्वात् ॥ २११ ॥

॥ सा क्षि स्व रू प म् ॥

पञ्चानामपि कोशानां निषेधे युक्तितः कृते ।
तन्निषेधावधिः साक्षी बोधरूपोऽवशिष्यते ॥ २१२ ॥

योऽयमात्मा स्वयंज्योतिः पञ्चकोशविलक्षणः ।
अवस्थात्रयसाक्षी सन् निर्विकारो निरञ्जनः ।
सदानन्दः स विज्ञेयः स्वात्मत्वेन विपश्चिता ॥ २१३ ॥

शिष्य उवाच—

मिथ्यात्वेन निषिद्धेषु कोशेष्वेतेषु पञ्चसु ।
सर्वाभावं विना किंचित् न पश्याम्यत्र हे गुरो ॥ २१४ ॥
विज्ञेयं किमु वस्त्वस्ति स्वात्मनाऽऽत्मविपश्चिता[1] ॥ २१५ ॥

श्रीगुरुरुवाच—

सत्यमुक्तं त्वया विद्वन् ! निपुणोऽसि विचारणे ।
अहमादिविकारास्ते तदभावोऽयमप्यथ[2] ॥ २१६ ॥

सर्वे येनानुभूयन्ते यः स्वयं नानुभूयते ।
तमात्मानं वेदितारं विद्धि बुद्ध्या सुसूक्ष्मया ॥ २१७ ॥

तत्साक्षिकं भवेत्तत्तत् यद्यद्येनानुभूयते ।
कस्याप्यननुभूतार्थे साक्षित्वं नोपयुज्यते ॥ २१८ ॥

असौ स्वसाक्षिको भावो यतः स्वेनानुभूयते ।
अतः परं स्वयं साक्षात् प्रत्यगात्मा न चेतरः ॥ २१९ ॥

जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरं योऽसौ समुज्जृम्भते
प्रत्यग्रूपतया सदाऽहमहमित्यन्तः स्फुरन्नेकधा ।
नानाकारविकारभाजिन इमान् पश्यन्नहंधीमुखान्
नित्यानन्दचिदात्मना स्फुरति तं विद्धि स्वमेतं हृदि ॥ २२०

घटोदके बिम्बितमर्कबिम्बं
आलोक्य मूढो रविमेव मन्यते ।
तथा चिदाभासमुपाधिसंस्थं
भ्रान्त्याऽहमित्येव जडोऽभिमन्यते ॥ २२१ ॥

घटं जलं तद्गतमर्कबिम्बं
विहाय सर्वं दिवि वीक्ष्यतेऽर्कः[3] ।

[1]नाऽत्र विपश्चिता. [2]प्यनु. [3]विनिरी.

तटस्थितस्तत्त्रि[1]तयावभासकः
स्वयंप्रकाशो विदुषा यथा तथा ॥ २२२ ॥

देहं धियं चित्प्रतिबिम्बमेतं विसृज्य बुद्धौ निहितं गुहायाम्।
द्रष्टारमात्मानमखण्डबोधं सर्वप्रकाशं सदसद्विलक्षणम्॥२२३॥

नित्यं विभुं सर्वगतं सुसूक्ष्मं
अन्तर्बहिः शून्यमनन्यमात्मनः ।
विज्ञाय सम्यक् निजरूपमेतत्
पुमान् विपाप्मा विरजो विमृत्युः ॥ २२४ ॥

विशोक आनन्दघनो विपश्चित् स्वयं कुतश्चिन्न बिभेति कश्चित्।
नान्योऽस्ति पन्था भवबन्धमुक्तेः विना स्वतत्त्वावगमं मुमुक्षोः॥

॥ ब्र ह्म णो ऽ द्वि ती य त्व म् ॥

ब्रह्माभिन्नत्वविज्ञानं भवमोक्षस्य कारणम् ।
येनाद्वितीयमानन्दं ब्रह्म सम्पद्यते बुधः ॥ २२६ ॥

ब्रह्मभूतस्तु संसृत्यै विद्वान्नावर्तते पुनः ।
विज्ञातव्यमतः सम्यक् ब्रह्माभिन्नत्वमात्मनः ॥ २२७ ॥

सत्यं ज्ञानमनन्तं ब्रह्म विशुद्धं परं स्वतः सिद्धम् ।
नित्यानन्दैकरसं प्रत्यगभिन्नं निरन्तरं जयति ॥ २२८ ॥

सदिदं परमाद्वैतं स्वस्मादन्यस्य वस्तुनोऽभावात् ।
न ह्यन्यदस्ति किञ्चित् सम्यक् परमार्थवस्तुबोधदशायाम् ॥

यदिदं सकलं विश्वं नानारूपं प्रतीतमज्ञानात् ।
तत् सर्वं ब्रह्मैव प्रत्यस्ताशेषभावनादोषम् ॥ २३० ॥

मृत्कार्यभूतोऽपि मृदो न भिन्नः
कुम्भोऽस्ति सर्वत्र तु मृत्स्वरूपात् ।

[1]कूटस्थ एतन्त्रि.

न कुम्भरूपं पृथगस्ति कुम्भः
कुतो मृषाकल्पितनाममात्रः ॥ २३१ ॥

केनापि मृद्भिन्नतया स्वरूपं
घटस्य सन्दर्शयितुं न शक्यते ।
अतो घटः कल्पित एव मोहात्
मृदेव सत्यं परमार्थभूतम् ॥ २३२ ॥

सद्ब्रह्मकार्यं सकलं सदेव
तन्मात्रमेतन्न ततोऽन्यदस्ति ।
अस्तीति यो वक्ति न तस्य मोहो
विनिर्गतो निद्रितवत् प्रजल्पः ॥ २३३ ॥

‘ब्रह्मैवेदं विश्वम्’* इत्येव वाणी
श्रौती ब्रूतेऽथर्वनिष्ठा वरिष्ठा ।
तस्मात्सर्वं ब्रह्ममात्रं हि विश्वं
नाधिष्ठानाद्भिन्नताऽऽरोपितस्य ॥ २३४ ॥

सत्यं यदि स्याज्जगदेतदात्मनोऽ
नन्तत्वहानिर्निगमाप्रमाणता ।
असत्यवादित्वमपीशितुः स्यात्
नैतत्त्रयं साधु हितं महात्मनाम् ॥ २३५ ॥

ईश्वरो वस्तुतत्त्वज्ञो न चाहं तेष्ववस्थितः ।
न च मत्स्थानि भूतानीत्येवमेव व्यचीकथत् ॥ २३६ ॥

यदि सत्यं भवेद्विश्वं सुषुप्तावुपलभ्यताम् ।
यन्नोपलभ्यते किञ्चित् अतोऽसत् स्वप्नवन्मृषा ॥ २३७ ॥

अतः पृथङ्नास्ति जगत्परात्मन
पृथक्प्रतीतिस्तु मृषा गुणादिवत्[1] ।

---

* मु. २-२-११.

[1] भ्रनैल्यवत्.

आरोपितस्यास्ति किमर्थवत्ताऽ
 धिष्ठानमाभाति तथा भ्रमेण ॥ २३८ ॥

भ्रान्तस्य यद्यद् भ्रमतः प्रतीतं
 ब्रह्मैव तत्तद्रजतं हि शुक्तिः ।
इदन्तया ब्रह्म सदैव रूप्यते
 त्वारोपितं ब्रह्मणि नाममात्रम् ॥ २३९ ॥

॥ ब्रह्मस्वरूपम् ॥

अतः परं ब्रह्म सदद्वितीयं विशुद्धविज्ञानघनं निरञ्जनम् ।
प्रशान्तमाद्यन्तविहीनमक्रियं निरन्तरानन्दरसस्वरूपम् ॥२४०॥

निरस्तमायाकृतसर्वभेदं
 नित्यं ध्रुवं निष्कलमप्रमेयम् ।
अरूपमव्यक्तमनाख्यमव्ययं
 ज्योतिः स्वयं किञ्चिदिदं चकास्ति ॥ २४१ ॥

ज्ञातृज्ञेयज्ञानशून्यं अनन्तं निर्विकल्पकम् ।
केवलाखण्डचिन्मात्रं परं तत्त्वं विदुर्बुधाः ॥ २४२ ॥

अहेयमनुपादेयं मनोवाचामगोचरम् ।
अप्रमेयमनाद्यन्तं ब्रह्म पूर्णं महन्महः ॥ २४३ ॥

॥ तत्त्वमसिमहावाक्यार्थः ॥

तत्त्वम्पदाभ्यामभिधीयमानयोः
 ब्रह्मात्मनोः शोधितयोर्यदीत्थम् ।
श्रुत्या तयोस्तत्त्वमसीति सम्यक्
 एकत्वमेव प्रतिपाद्यते मुहुः ॥ २४४ ॥

ऐक्यं तयोर्लक्षितयोर्न वाच्ययोः
 निगद्यतेऽन्योन्यविरुद्धधर्मिणोः ।

खद्योतभान्वोरिव राजभृत्ययोः
कूपाम्बुराश्योः परमाणुमेर्वोः ॥ २४५ ॥

तयोर्विरोधोऽयमुपाधिकल्पितो
न वास्तवः कश्चिदुपाधिरेषः ।
ईशस्य माया महदादिकारणं
जीवस्य कार्यं शृणु पञ्च कोशाः ॥ २४६ ॥

एतावुपाधी परजीवयोस्तयोः
सम्यङ्निरासे न परो न जीवः ।
राज्यं नरेन्द्रस्य भटस्य खेटकः
तयोरपोहे न भटो न राजा ॥ २४७ ॥

"अथात आदेश"* इति श्रुतिः स्वयं
निषेधति ब्रह्मणि कल्पितं द्वयम् ।
श्रुतिप्रमाणानुगृहीतयुक्त्या[1]
तयोर्निरासः करणीय एवम् ॥ २४८ ॥

नेदं नेदं कल्पितत्वान्न सत्यं
रज्जौ दृष्टव्यालवत् स्वप्नवच्च ।
इत्थं दृश्यं साधु युक्त्या व्यपोह्य
ज्ञेयः पश्चादेकभावस्तयोर्यः ॥ २४९ ॥

ततस्तु तौ लक्षणया सुलक्ष्यौ
तयोरखण्डैकरसत्वसिद्धये ।
नालं जहत्या न तथाऽजहत्या
किन्तूभयार्थात्मिकयैव भाव्यम् ॥ २५० ॥

स देवदत्तोऽयमितीह चैकता विरुद्धधर्मांशमपास्य कथ्यते ।
यथा तथा तत्त्वमसीति वाक्ये विरुद्धधर्मानुभयत्र हित्वा ॥२५१

*बृ. उ. ४-३-६.

[1] बोधात्.

संलक्ष्य चिन्मात्रतया सदात्मनोः अखण्डभावः परिचीयते बुधैः।
एवं महावाक्यशतेन कथ्यते ब्रह्मात्मनोरैक्यमखण्डभावः ॥२५२

अस्थूलमित्येतदसन्निरस्य सिद्धं स्वतो व्योमवदप्रतर्क्यम् ।
अतो मृषामात्रमिदं प्रतीतं
जहीहि यत् स्वात्मतया गृहीतम् ।
ब्रह्माहमित्येव विशुद्धबुद्ध्या
विद्धि स्वमात्मानमखण्डबोधम् ॥ २५३ ॥

मृत्कार्यं सकलं घटादि सततं मृन्मात्रमेवाभितः
तद्वत् संजनितं सदात्मकमिदं सन्मात्रमेवाखिलम् ।
यस्मान्नास्ति सतः परं किमपि तत् सत्यं स आत्मा स्वयं
तस्मात्तत्त्वमसि प्रशान्तममलं ब्रह्माद्वयं यत्परम् ॥ २५४ ॥

निद्राकल्पितदेशकालविषयज्ञात्रादि सर्वं यथा
मिथ्या तद्वदिहापि जाग्रति जगत् स्वाज्ञानकार्यत्वतः ।
यस्मादेवमिदं शरीरकरणप्राणाहमाद्यप्यसत्
तस्मात्तत्त्वमसि प्रशान्तममलं ब्रह्माद्वयं यत् परम् ॥२५५॥

जातिनीतिकुलगोत्रदूरगं नामरूपगुणदोषवर्जितम् ।
देशकालविषयातिवर्ति यत् ब्रह्म तत्त्वमसि भावयात्मनि ॥ २५६

यत्परं सकलवागगोचरं गोचरं विमलबोधचक्षुषः ।
शुद्धचिद्घनमनादिवस्तु यत् ब्रह्म तत्त्वमसि भावयात्मनि ॥२५७

षड्भिरूर्मिभिरयोगि योगिहृद्भावितं न करणैर्विभावितम् ।
बुद्ध्यवेद्यमनवद्यभूति यत् ब्रह्म तत्त्वमसि भावयात्मनि ॥२५८॥

भ्रान्तिकल्पितजगत्कलाश्रयं स्वाश्रयं च सदसद्विलक्षणम् ।
निष्कलं निरुपमानमृद्धिमद्ब्रह्म तत्त्वमसि भावयात्मनि ॥२५९

जन्मवृद्धिपरिणत्यपक्षयव्याधिनाशनविहीनमव्ययम् ।
विश्वसृष्ट्यवनघातकारणं ब्रह्म तत्त्वमसि भावयात्मनि ॥२६०

अस्तभेदमनपास्तलक्षणं निस्तरङ्गजलराशिनिश्चलम् ।
नित्यमुक्तमविभक्तमूर्ति यत् ब्रह्म तत्त्वमसि भावयात्मनि ॥२६१
एकमेव सदनेककारणं कारणान्तरनिरासकारणम् ।
कार्यकारणविलक्षणं स्वयं ब्रह्म तत्त्वमसि भावयात्मनि ॥२६२॥
निर्विकल्पकमनल्पमक्षरं यत् क्षराक्षरविलक्षणं परम् ।
नित्यमव्ययसुखं निरञ्जनं ब्रह्म तत्त्वमसि भावयात्मनि॥२६३
यद्विभाति सदनेकधा भ्रमात् नामरूपगुणविक्रियात्मना ।
हेमवत् स्वयमविक्रियं सदा ब्रह्म तत्त्वमसि भावयात्मनि॥२६४
यश्चकास्त्यनपरं परात्परं प्रत्यगेकरसमात्मलक्षणम् ।
सत्यचित्सुखमनन्तमव्ययं[1]ब्रह्म तत्त्वमसि भावयात्मनि ॥२६५॥
उक्तमर्थमिव चात्मनि स्वयं भावय प्रथितयुक्तिभिर्धिया ।
*संशयादिरहितं कराम्बुवत् तेन तत्त्वनिगमो भविष्यति ॥२६६॥*

*स्वबोधमात्रं परिशुद्धतत्त्वं*
*विज्ञाय संघे नृपवच्च सैन्ये ।*
*तदात्मनैवात्मनि सर्वदा स्थितो*
विलापय ब्रह्मणि दृश्यजातम् ॥ २६७ ॥

बुद्धौ गुहायां सदसद्विलक्षणं ब्रह्मास्ति सत्यं परमद्वितीयम् ।
तदात्मना योऽत्र वसेद्गुहायां पुनर्न तस्याङ्गगुहाप्रवेशः ॥२६८॥

॥ वा स ना क्ष यो पा यः ॥

ज्ञाते वस्तुन्यपि बलवती वासनाऽनादिरेषा
कर्ता भोक्ताऽप्यहमिति दृढा याऽस्य संसारहेतुः ।
प्रत्यग्दृष्ट्याऽऽत्मनि निवसता साऽपनेया प्रयत्नात्
मुक्तिं प्राहुस्तदिह मुनयो वासनातानवं यत् ॥२६९॥
अहं ममेति यो भावो देहाक्षादावनात्मनि ।
अध्यासोऽयं निरस्तव्यो विदुषा स्वात्म[2]निष्ठया ॥ २७० ॥

[1]सद्वय. [2]ब्रह्म.

ज्ञात्वा स्वं प्रत्यगात्मानं बुद्धितद्वृत्तिसाक्षिणम् ।
सोऽहमित्येव सद्वृत्त्या स्वान्यत्रात्ममतिं जहि ॥ २७१ ॥

लोकानुवर्तनं त्यक्त्वा त्यक्त्वा देहानुवर्तनम् ।
शास्त्रानुवर्तनं त्यक्त्वा स्वाध्यासापनयं कुरु ॥ २७२ ॥

लोकवासनया जन्तोः शास्त्रवासनयाऽपि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ॥ २७३ ॥

संसारकारागृहमोक्षमिच्छोः
अयोमयं पादनिबद्धशृङ्खलम् ।
वदन्ति तज्ज्ञाः पटुवासनात्रयं
योऽस्माद्विमुक्तः समुपैति मुक्तिम् ॥ २७४ ॥

जलादिसम्पर्कवशात् प्रभूतदुर्गन्धधूताऽगुरुदिव्यवासना ।
संघर्षणेनैव विभाति सम्यक् विधूयमाने सति बाह्यगन्धे ॥२७५

अन्तःश्रितानन्तदुरन्तवासना-
धूलीविलिप्ता परमात्मवासना ।
प्रज्ञातिसंघर्षणतो विशुद्धा
प्रतीयते चन्दनगन्धवत् स्फुटा ॥ २७६ ॥

अनात्मवासनाजालैः तिरोभूताऽऽत्मवासना ।
नित्यात्मनिष्ठया तेषां नाशे भाति स्वयं स्फुटा ॥ २७७ ॥

यथायथा प्रत्यगवस्थितं मनः
तथातथा मुञ्चति बाह्यवासनाः ।
निश्शेषमोक्षे सति वासनानां
आत्मानुभूतिः प्रतिबन्धशून्या ॥ २७८ ॥

स्वात्मन्येव सदा स्थित्वा मनो नश्यति योगिनः ।
वासनानां क्षयश्चातः स्वाध्यासापनयं कुरु ॥ २७९ ॥

कोशः प्राणमयोऽयं वायुविशेषो वपुष्यवच्छिन्नः ।
अस्य कथमात्मता स्यात् क्षुत्तृष्णाभ्यामुपेयुषः पीडाम् ॥ १० ॥

कुरुते वपुष्यहन्तां गेहादौ यः करोति ममतां च ।
रागद्वेषविधेयो नासावात्मा मनोमयः कोशः ॥ ११ ॥

सुप्तौ स्वयं विलीना बोधे व्याप्ता कलेबरं सकलम् ।
विज्ञानशब्दवाच्या चित्प्रतिबिम्बा न बुद्धिरप्यात्मा ॥ १२ ॥

सुप्तिगतैः सुखलेशैः अभिमनुते यः सुखी भवामीति ।
आनन्दकोशनामा सोऽहङ्कारः कथं भवेदात्मा ॥ १३ ॥

यः स्फुरति बिम्बभूतः स भवेदानन्द एव सकलात्मा ।
प्रागूर्ध्वमपि च सत्त्वात् अविकारित्वादबाध्यमानत्वात् ॥१४॥

अन्नमयादेरस्मात् अपरं यदि नानुभूयते किञ्चित् ।
अनुभविताऽन्नमयादेः अस्तीत्यस्मिन् न कश्चिदपलापः ॥ १५ ॥

स्वयमेवानुभवत्वात् यद्यप्येतस्य नानुभाव्यत्वम् ।
सकृदप्यभावशङ्का न भवेद्बोधस्वरूपसत्तायाः ॥ १६ ॥

अनुभवति विश्वमात्मा विश्वेनासौ न चानुभूयते [येत] ।
न खलु प्रकाश्यतेऽसौ विश्वमशेषं प्रकाशयन् भानुः ॥ १७ ॥

तदिदं तादृशमीदृशमेतावत्तावदिति च यन्न भवेत् ।
ब्रह्म तदित्यवधेयं नो चेद्विषयो भवेत् परोक्षं च ॥ १८ ॥

इदमिदमिति प्रतीते वस्तुनि सर्वत्र बाध्यमानेऽपि ।
अनिदमबाध्यं तत्त्वं सत्त्वादेतस्य न च परोक्षत्वम् ॥१९॥

नावेद्यमपि परोक्षं भवति ब्रह्म स्वयंप्रकाशत्वात् ।
सत्यं ज्ञानमनन्तं ब्रह्मेत्येतस्य लक्षणं प्रथते ॥ २० ॥

सति कोशशक्त्युपाधौ सम्भवतस्तस्य जीवतेश्वरते ।
नो चेत् तयोरभावात् विगतविशेषं विभाति निजरूपम् ॥ २१ ॥
सति सकलदृश्यबाधे न किमप्यस्तीति लोकसिद्धं चेत् ।
यन्न किमपीति सिद्धं ब्रह्म तदेवेति वेदतः सिद्धम् ॥२२॥
एवमपि विरहितानां तत्त्वमसीत्यादिवाक्यचिन्तनया ।
प्रतिभासेष परोक्षवत् आत्मा प्रसक् प्रकाशमानोऽपि ॥२३॥
तस्मात् पदार्थशोधनपूर्वं वाक्यस्य चिन्तयन्नर्थम् ।
दैशिकदयाप्रभावात् अपरोक्षयति क्षणेन चात्मानम् ॥ २४ ॥
देहेन्द्रियादिधर्मान् आत्मन्यारोपयन्नभेदेन ।
कर्तृत्वाद्यभिमानी बोधः स्यात् त्वंपदस्य वाच्योऽर्थः ॥२५॥
देहाहन्तेन्द्रियाणां साक्षी तेभ्यो विलक्षणत्वेन ।
प्रतिभाति योऽवबोधः प्रोक्तोऽसौ त्वंपदस्य लक्ष्योऽर्थः ॥२६॥
वेदावमानवाचा संवेद्यं सकलजगदुपादानम् ।
सर्वज्ञताद्युपेतं चैतन्यं तत्पदस्य वाच्योऽर्थः ॥ २७ ॥
विविधोपाधिविमुक्तं विश्वातीतं विशुद्धमद्वैतम् ।
अक्षरमनुभववेद्यं चैतन्यं तत्पदस्य लक्ष्योऽर्थः ॥ २८ ॥
सामानाधिकरण्यं तदनु विशेषणविशेष्यता चेति ।
अथ लक्ष्यलक्षकत्वं भवति पदार्थात्मतां च सम्बन्धः ॥२९॥
एकत्र वृत्तिरर्थे शब्दानां भिन्नवृत्तिहेतूनाम् ।
सामानाधिकरण्यं भवतीत्येवं वदन्ति लाक्षणिकाः ॥ ३० ॥
प्रात्यक्ष्यं पारोक्ष्यं[1] परिपूर्णत्वं च सद्वितीयत्वम् ।
इतरेतरं विरुद्धं तत इह भवितव्यमेव लक्षणया ॥ ३१ ॥
मानान्तरोपरोधे मुख्यार्थस्यापरिग्रहे जाते ।
मुख्याविनाकृतेऽर्थे या वृत्तिः सैव लक्षणा प्रोक्ता ॥ ३२ ॥

[1] "प्रत्यक्षत्व परोक्षत्वं" इति तु मातृकाकोशपाठः.

निखिलमपि वाच्यमर्थं त्यक्त्वा वृत्तिस्तदन्वितेऽन्यार्थे ।
जहतीति लक्षणा स्यात् गङ्गायां घोषवदिह न ग्राह्या[1] ॥३३॥

वाच्यार्थमत्यजन्त्याः यस्या वृत्तेः प्रवृत्तिरन्यार्थे ।
इयमजहतीति कथिता शोणो धावतिवदत्र न ग्राह्या ॥३४॥

जहदजहतीति सा स्यात् या वाच्यार्थैकदेशमपहाय ।
बोधयति चैकदेशं सोऽयं द्विज इतिवदाश्रयेदेनाम् ॥ ३५॥

सोऽयं द्विज इति वाक्यं त्यक्त्वाऽपरोक्षपरोक्षदेशाद्यम् ।
द्विजमात्रलक्षकत्वात् कथयत्यैक्यं पदार्थयोरुभयोः ॥ ३६ ॥

तद्वत्तत्त्वमसीति त्यक्त्वाऽपरोक्षपरोक्षतादीनि ।
चिद्वस्तु लक्षयित्वा बोधयति स्पष्टमसिपदेनैक्यम् ॥ ३७ ॥

इत्थं बोधितमर्थं महता वाक्येन दर्शितैक्येन ।
अहमित्यपरोक्षयतां वेदो वेदयति वीतशोकत्वम् ॥ ३८ ॥

प्रायः प्रवर्तकत्वं विधिवचसां लोकवेदयोर्दृष्टम् ।
सिद्धं बोधयतोऽर्थं कथमेतद्भवति तत्त्वमस्यादेः ॥ ३९ ॥

विधिरेव न प्रवृत्तिं जनयत्यभिलषितवस्तुबोधोऽपि ।
राजा भवति सुतोऽभूत् इति बोधेन प्रवर्तते लोकः ॥४०॥

ऐक्यपरैः श्रुतिवाक्यैः आत्मा शश्वत् प्रकाशमानोऽपि ।
देशिकदयाविहीनैः अपरोक्षयितुं न शक्यते पुरुषैः ॥४१ ॥

विरहितकाम्यनिषिद्धो विहितानुष्ठाननिर्मलस्वान्तः ।
भजति निजमेव बोधं गुरुणा किमिति त्वया न मन्तव्यम् ॥ ४२॥

कर्मभिरेव न बोधः प्रभवति गुरुणा विना दयानिधिना ।
आचार्यवान् हि पुरुषो वेदेत्यर्थस्य वेदसिद्धत्वात् ॥ ४३ ॥

---

[1] घ इतिवदत्र न ग्राह्या.

वेदोऽनादितया वा यद्वा परमेश्वरप्रणीततया ।
भवति परमं प्रमाणं बोधो नास्ति स्वतश्च परतो वा ॥ ४४॥

नापेक्षते यदन्यत् यदपेक्षन्तेऽखिलानि मानानि ।
वाक्यं तन्निगमानां मानं ब्रह्माद्यतीन्द्रियावगतौ ॥ ४५ ॥

मानं प्रबोधयन्तं बोधं मानेन ये बुभुत्सन्ते ।
एधोभिरेव दहनं दग्धुं वाञ्छन्ति ते महात्मानः ॥ ४६ ॥

वेदोऽनादिरमुष्य व्यञ्जक ईशस्स्वयंप्रकाशात्मा ।
तदभिव्यक्तिमुदीक्ष्य प्रोक्तोऽसौ सूरिभिः प्रमाणमिति ॥ ४७॥

रूपाणामवलोके चक्षुरिवान्यन्न कारणं दृष्टम् ।
तद्वददृष्टावगतौ वेदवदन्यो न वेदको हेतुः ॥ ४८ ॥

निगमेषु निश्चितार्थं तन्त्रे कश्चिद्यदि प्रकाशयति ।
तदिदमनुवादमात्रं प्रामाण्यं तस्य सिध्यति न किञ्चित् ॥४९॥

अंशद्वयवति निगमे साधयति द्वैतमेव कोऽप्यंशः ।
अद्वैतमेव वस्तु प्रतिपादयति प्रसिद्धमपरोंऽशः ॥ ५० ॥

अद्वैतमेव सत्यं तस्मिन् द्वैतं न सत्यमध्यस्तम् ।
रजतमिव शुक्तिकायां मृगतृष्णायामिवोदकस्फुरणम् ॥ ५१ ॥

आरोपितं यदि स्यात् अद्वैतं वस्त्ववस्तुनि द्वैते ।
युक्तं नैव तदा स्यात् सत्येऽध्यासो भवत्यसत्यानाम् ॥ ५२ ॥

यद्यारोपणमुभयोः तद्व्यतिरिक्तस्य कस्य चिदभावात् ।
आरोपणं न शून्ये तस्माद्द्वैतसत्यता ग्राह्या ॥ ५३ ॥

प्रत्यक्षाद्यनवगतं श्रुत्या प्रतिपादनीयमद्वैतम् ।
द्वैतं न प्रतिपाद्यं तस्य स्वयमेव लोकसिद्धत्वात् ॥ ५४ ॥

अद्वैतं सुखरूपं दुस्सहदुःखं सदा भवेद्द्वैतम् ।
यत्र प्रयोजनं स्यात् प्रतिपादयति श्रुतिस्तदेवासौ ॥ ५५ ॥

निगमगिरा प्रतिपाद्यं वस्तु यदानन्दरूपमद्वैतम् ।
स्वाभाविकं स्वरूपं जीवत्वं तस्य केचन ब्रुवते ॥ ५६ ॥

स्वाभाविकं यदि स्यात् जीवत्वं तस्य विशदविज्ञप्तेः ।
सकृदपि न तद्विनाशं गच्छेदुष्णप्रकाशवद्वह्नेः ॥ ५७ ॥

यद्वदयो रसविद्धं काञ्चनतां याति तद्वदेवासौ ।
जीवस्साधनशक्त्या परतां यातीति केचिदिच्छन्ति ॥ ५८ ॥

तदिदं भवति न युक्तं गतवति तस्मिन् चिरेण रसवीर्ये ।
प्रतिपद्यते प्रणाशं हैमो वर्णोऽप्ययस्समारूढः ॥ ५९ ॥

जीवत्वमपि तथेदं बहुविधमुखदुःखलक्षणोपेतम् ।
गतमिव साधनशक्त्या प्रतिभासेव प्रयाति न विनाशम् ॥६०॥

तस्मात् स्वतो यदि स्यात् जीवस्सततं स एव जीवस्स्यात् ।
एवं यदि परमात्मा परमात्मैवायमिति भवेद्युक्तम् ॥ ६१ ॥

यदि वा परेण साम्यं जीवश्चेद्व्रजति साधनबलेन ।
कालेन तदपि कियता नश्यत्येवेति निश्चितं सकलैः ॥६२॥

तस्मात् परं स्वकीयं मोहं मोहात्मकं च संसारम् ।
स्वज्ञानेन जहित्वा पूर्णः स्वयमेव शिष्यते नान्यत् ॥६३॥

सत्यज्ञानानन्दं प्रकृतं परमात्मरूपमद्वैतम् ।
अवबोधयन्ति निखिलाः श्रुतयः स्मृतिभिः समं समस्ताभिः॥६४॥

एकत्वबोधकानां निखिलानां निगमवाक्यजालानाम् ।
वाक्यान्तराणि सकलान्यभिधीयन्ते स्म शेषभूतानि ॥ ६५ ॥

यस्मिन् मिहिरवदुदिते तिमिरवदपयान्ति कर्तृताऽऽदीनि ।
ज्ञानं विरहितभेदं कथमेतद्भवति तत्त्वमस्यादेः ॥ ६६ ॥

कर्मप्रकरणनिष्ठं ज्ञानं कर्माङ्गमिष्यते प्राज्ञैः ।
भिन्नप्रकरणभाजः कर्माङ्गत्वं कथं भवेज्ज्ञप्तेः ॥ ६७ ॥

अधिकारिविषयभेदौ कर्मज्ञानात्मकावुभौ काण्डौ ।
एवं सति कथमनयोः अङ्गाङ्गित्वं परस्परं घटते ॥ ६८ ॥

ज्ञानं कर्मणि न स्यात् ज्ञाने कर्मेदमपि तथा न स्यात् ।
कथमनयोरुभयोर्तु तपनतमोवत्समुच्चयो घटते ॥ ६९ ॥

तस्मान्मोहनिवृत्तौ ज्ञानं न सहायमन्यदर्थयते ।
यद्वद्घनतरतिमिरप्रकरपरिध्वंसने सहस्रांशुः ॥ ७० ॥

ज्ञानं तदेवममलं साक्षी विश्वस्य भवति परमात्मा ।
सम्बध्यते न धर्मैः साक्षी तैरेव सच्चिदानन्दः ॥ ७१ ॥

रज्ज्वादेरुरगाद्यैः सम्बन्धवदस्य दृश्यसम्बन्धः ।
सततमसङ्गोऽयमिति श्रुतिरप्यमुमर्थमेव साधयति ॥ ७२ ॥

कर्तृ च कर्म च यस्य स्फुरति ब्रह्मैव तन्न जानाति ।
यस्य न कर्तृ न कर्म स्फुरतरमयमेव वेदितुं क्रमते ॥७३॥*

कर्तृत्वादिकमेतत् मायाशक्त्या प्रपद्यते निखिलम् ।
इति केचिदाहुरेषा भ्रान्तिर्ब्रह्मातिरेकतो नान्यत् ॥ ७४ ॥

तस्मिन् ब्रह्मणि विदिते विश्वमशेषं भवेदिदं विदितम् ।
कारणमृदि विदितायां घटकरकाद्या यथाऽवगम्यन्ते ॥ ७५ ॥

तदिदं कारणमेकं विगतविशेषं विशुद्धचिद्रूपम् ।
तस्मात् सदेकरूपात् मायोपहितादभूदशेषमिदम् ॥ ७६ ॥

---

*"इदानीं ब्रह्मस्वरूपातिरिक्तं धर्मादिवस्तुजातं किमपि नास्ति येन संबन्धाद्यपेक्षा स्यात् इत्याह—कर्त्रिति ॥ कर्तृ नाम कर्तृत्वम् । चकारो वाऽर्थः । कर्म च कर्मत्वं वा यस्य स्फुरति स ब्रह्मैव, कर्तृकर्मस्फुरणरूपत्वात् । कर्तृ कर्म ब्रह्म न जानाति, मिथ्यावस्तुत्वादित्यर्थः । यस्य ब्रह्मणः कर्तृ कर्म किमपि नास्ति स ब्रह्मरूपोऽयमात्मैव स्फुटतरं वेदितुं ज्ञातुं क्रमते उपक्रमते" ॥ इति सच्चिदानन्दसरस्वतीविरचितटीकायाम्.

कारणमसदिति केचित् कथयन्त्यसतो भवेन्न कारणता ।
अङ्कुरजननी शक्तिः सति खलु बीजे समीक्ष्यते सकलैः ॥७७॥

कारणमसदिति कथयन् वन्ध्यापुत्रेण निर्वहेत् कार्यम् ।
किञ्च मृगतृष्णिकाम्भः पीत्वोदन्यां महीयसीं शमयेत् ॥७८॥

यस्मान्न सोऽयमसतो वादः सम्भवति शास्त्रयुक्तिभ्याम् ।
तस्मात् सदेव तत्त्वं सर्वेषां कारणं भवति जगताम् ॥७९॥

जगदाकारतयाऽपि प्रथते गुरुशिष्यविग्रहतयाऽपि ।
ब्रह्माद्याकारतया (ऽपि) प्रतिभातीदं परात्परं तत्त्वम् ॥८०॥

सत्यं जगदिति भानं संसृतये स्यादपक्वचित्तानाम् ।
तस्मादसत्यमेतत् निखिलं प्रतिपादयन्ति निगमान्ताः ॥ ८१ ॥

परिपक्वमानसानां पुरुषवराणां पुरातनैः सुकृतैः ।
ब्रह्मैवेदं सर्वं जगदिति भूयः प्रबोधयत्येषः ॥ ८२ ॥

अनवगतकाञ्चनानां भूषणधीरेव भूषणे हैमे ।
एवमविवेकभाजां जगति जनानां न तात्त्विकी धिषणा ॥८३॥

अहमालम्बनसिद्धं कस्य परोक्षं भवेदिदं ब्रह्म ।
तदपि विचारविहीनैः अपरोक्षयितुं न शक्यते मुग्धैः ॥८४॥

अहमिदमिति च मतिभ्यां सततं व्यवहरति सर्वलोकोऽपि ।
प्रथमा प्रतीचि चरमा निवसति वपुरिन्द्रियादिबाह्येऽर्थे ॥८५॥

वपुरिन्द्रियादिविषयाऽहम्बुद्धिश्चेन्महत्यसौ भ्रान्तिः ।
तद्बुद्धिरतस्मिन्निसध्यासत्वेन शास्यमानत्वात् ॥ ८६ ॥

तस्मादशेषसाक्षी परमात्मैवाहमर्थ इत्युचितम् ।
अजडवदेव जडोऽयं सत्सम्बन्धाद्भवत्यहङ्कारः ॥ ८७ ॥

तस्मात् सर्वशरीरेष्वहमहमित्येव भासते स्पष्टः ।
यः प्रत्ययो विशुद्धः तस्य ब्रह्मैव भवति मुख्योऽर्थः ॥८८॥

गोशब्दादिव गोत्वं तदपि व्यक्तिः प्रतीयतेऽर्थतया ।
अहमर्थः परमात्मा तद्वद्भ्रान्त्या भवत्यहङ्कारः ॥ ८९ ॥

दग्धृत्वादिकमयसः पावकसङ्गेन भासते यद्वत् ।
तद्वच्चेतनसङ्गात् अहमि प्रतिभान्ति कर्तृताऽऽदीनि ॥ ९० ॥

देहेन्द्रियादिदृश्यव्यतिरिक्तं विमलमतुलमद्वैतम् ।
अहमर्थमिति विदित्वा तद्व्यतिरिक्तं न कल्पयेत्किञ्चित् ॥९१॥

यद्वत् सुखदुःखानां अवयवभेदादनेकता देहे ।
तद्वदिह सत्यभेदेऽप्यनुभववैचित्र्यमात्मनामेषाम् ॥ ९२ ॥

किमिदं किमस्य रूपं कथमेतदभूदमुष्य को हेतुः ।
इति न कदाऽपि विचिन्त्यं चिन्त्यं मायेति धीमता विश्वम् ॥९३॥

दन्तिनि दारुविकारे दारु तिरोभवति सोऽपि तत्रैव ।
जगति तथा परमात्मा परमात्मन्यपि जगत्तिरोधत्ते ॥ ९४ ॥

आत्ममये महति पटे विविधजगच्चित्रमात्मना लिखितम् ।
स्वयमेव केवलमसौ पश्यन् प्रमुदं प्रयाति परमात्मा ॥९५॥

चिन्मात्रममलमक्षयमद्वयमानन्दमनुभवारूढम् ।
ब्रह्मैवास्ति तदन्यत् न किञ्चिदस्तीति निश्चयो विदुषाम् ॥९६॥

व्यवहारस्य दशेयं विद्याऽविद्येति वेदपरिभाषा ।
नास्त्येव तत्त्वदृष्ट्या तत्त्वं ब्रह्मैव नान्यदस्त्यस्मात् ॥ ९७ ॥

अस्त्यन्यदिति मतं चेत् तदपि ब्रह्मैतदस्तितारूपम् ।
व्यतिरिक्तमस्तितायाः नास्तितया शून्यमेव तत्सिद्धम् ॥ ९८ ॥

तत्त्वावबोधशक्त्या स्थिरताया बाधिताऽपि सा माया ।
आदेहपातमेषां आभासात्माऽप्ययं निजो विदुषाम् ॥ ९९ ॥

एष विशेषो विदुषां पश्यन्तोऽपि प्रपञ्चसंसारम् ।
पृथगात्मनो न किंचित् पश्येयुः सकलनिगमनिर्णीतात् ॥ १०० ॥

किं चिन्त्यं किमचिन्त्यं किं कथनीयं किमप्यकथनीयम् ।
किं कृत्यं किमकृत्यं निखिलं ब्रह्मेति जानतां विदुषाम् ॥१०१॥

निखिलं दृश्यविशेषं दृग्रूपत्वेन पश्यतां विदुषाम् ।
बन्धो नापि न मुक्तिः न परात्मत्वं न चापि जीवत्वम् ॥ १०२॥

असकृदनुचिन्तितानां अव्याहततरनिजोपदेशानाम् ।
प्रामाण्यपरमसीम्नां निगमनमिदमेव निखिलनिगमानाम् ॥१०३॥

इत्थं निबोधितस्सन् गुरुणा शिष्यो हृष्यन् प्रणम्य तं पदयोः ।
स्वानुभवसिद्धमर्थं स्वयमेवान्तर्विचारयामास ॥ १०४ ॥

अजरोऽहमक्षरोऽहं प्राज्ञोऽहं प्रत्यगात्मबोधोऽहम् ।
परमानन्दमयोऽहं परमशिवोऽहं भवामि परिपूर्णः ॥ १०५ ॥

आद्योऽहमात्मभाजां आत्मानन्दानुभूतिरसिकोऽहम् ।
आबालगोपमखिलैः अहमित्यनुभूयमानमहिमाऽहम् ॥ १०६ ॥

इन्द्रियमुखविमुखोऽहं निजसुखबोधानुभूतिभरितोऽहम् ।
इतिमतिदूरतरोऽहं भावेनसुखितचित्तोऽहम् ॥ १०७ ॥

ईशोऽहमीश्वराणां ईर्ष्याद्वेषानुषङ्गरहितोऽहम् ।
ईक्षणविषयमतीनां ईप्सितपुरुषार्थसाधनपरोऽहम् ॥ १०८ ॥

उदयोऽहमेव जगतां उपनिषदुद्यानकृतविहारोऽहम् ।
उद्वेलशोकसागरशोषणबाडवहुतवहनार्चिरहम् ॥ १०९ ॥

ऊर्जस्वलनिजविभवैः ऊर्ध्वमधस्तिर्यगश्नुवानोऽहम् ।
ऊहापोहविचारैः उररीकृतवत्प्रतीयमानोऽहम् ॥ ११० ॥

ऋषिरहमृषिगणो[णको]ऽहं सृष्टिरहं सृज्यमानमहमेव ।
ऋद्धिरहं वृद्धिरहं तृप्तिरहं तृप्तिदीपदीप्तिरहम् ॥१११ ॥

एकोऽहमेतदीदृशमेवमिति स्फुरितभेदरहितोऽहम् ।
एष्टव्योऽहमनीहैः अन्तस्सुकृतानुभूतिरहितोऽहम् ॥ ११२ ॥

ऐक्यावभासकोऽहं वाक्यपरिज्ञानपावनमतीनाम् ।
ऐशमहमेव तत्त्वं नैशतमःप्रायमोहमिहिरोऽहम् ॥ ११३ ॥
ओजोऽहमोषधीनां ओतप्रोतायमानभुवनोऽहम् ।
ओंकाररसारसोल्लसदात्मसुखामोदमत्तभृङ्गोऽहम् ॥ ११४ ॥
औषधमहमशुभानां औपाधिकधर्मजालरहितोऽहम् ।
औदार्यातिशयोऽहं विविधचतुर्वर्गतारणपरोऽहम् ॥ ११५ ॥
अङ्कुशमहमखिलानां महत्तयामत्तवारणेन्द्राणाम् ।
अम्बरमिव विमलोऽहं शम्बररिपुजातविकृतिरहितोऽहम् ॥११६॥
भ्रमविकल्पमतीनां अस्खलदुपदेशगम्यमानोऽहम् ।
अस्थिरसुखविमुखोऽहं सुस्थिरसुखबोधसम्पदुचितोऽहम् ॥११७॥
करुणारसभरितोऽहं कबलितकमलासनादिलोकोऽहम् ।
कलुषा[हंरहितो][1]ऽहं कल्मषमुक्तोपलेपरहितोऽहम् ॥ ११८ ॥
खानामगोचरोऽहं खातीतोऽहं खपुष्पभवगोऽहम् ।
*खलजनदुरासदोऽहं खण्डज्ञानापनोदनपरोऽहम् ॥ ११९ ॥
*गलितद्वैतकथोऽहं देहीभवदखिलमृलहृदयोऽहम् ।
गन्तव्योऽहमनीहैः गत्यागतिरहितपूर्णबोधोऽहम् ॥ १२० ॥
घनतरविमोहतिमिरप्रकरप्रध्वंसभानुनिकरोऽहम् ।
घटिकायामररजनीवत्सरयुगकल्पकालभेदोऽहम् ॥ १२१ ॥
चरदचरदात्मकोऽहं चतुरमतिश्लाघ्यचरितोऽहम् ।
चपलजनदुर्गमोऽहं चलभवजलधिपारदेशोऽहम् ॥ १२२ ॥

---

[1]"कलुषाहङ्कारविलक्षणेऽहम्" इति मातृकाकोशे दृष्टपाठं तु छन्दोगतिविरोधान्नादियामहे ।

*पादद्वयमेतन्मातृकाकोशेष्वदृष्टमपि कस्मिंश्चिन्मुद्रितकोशे दर्शनात् अत्र निवेशितम्.

छन्दस्सिन्धुनिगूढज्ञानसुखाह्लादमोदमानोऽहम् ।
छलपदविहितमतीनां छन्नोऽहं शान्तिमार्गगम्योऽहम् ॥१२३॥

जलजासनादिगोचरपञ्चमहाभूतमूलभूतोऽहम् ।
जगदानन्दकरोऽहं जन्मजरारोगमरणरहितोऽहम् ॥ १२४ ॥

झङ्कृतिहुङ्कृतिसिञ्जितबृंहितमुखाविविधनादभेदोऽहम् ।
झडितिघटितात्मवेदनदीपपरिस्फुरितहृदयभवनोऽहम् ॥ १२५ ॥

ज्ञानमहं ज्ञेयमहं ज्ञाताऽहं ज्ञानसाधनगणोऽहम् ।
ज्ञातृज्ञानज्ञेयाविनाकृतमास्तित्वमात्रमेवाहम् ॥ १२६ ॥

तत्त्वातीतपदोऽहं तदन्तरोऽस्मीति भावरहितोऽहम् ।
तामसदुराधिगमोऽहं तत्त्वंपदबोधबोध्यहृदयोऽहम् ॥ १२७ ॥

दैवतदैत्यनिशाचरमानवतिर्यङ्महीधरादिरहम् ।
देहेन्द्रियरहितोऽहं दक्षिणपूर्वादिदिग्विभागोऽहम् ॥ १२८ ॥

धर्माधर्ममयोऽहं धर्माधर्मादिबन्धरहितोऽहम् ।
धार्मिकजनसुलभोऽहं धन्योऽहं धातुरादिभूतोऽहम् ॥ १२९ ॥

नामादिविरहितोऽहं नरकस्वर्गापवर्गरहितोऽहम् ।
नादान्तवेदितोऽहं नानागमनिखिलविश्वसारोऽहम् ॥ १३० ॥

परजीवभेदबाधकपरमार्थज्ञानशुद्धचित्तोऽहम् ।
प्रकृतिरहं विकृतिरहं परिणतिरहमस्मि भागधेयानाम् ॥१३१॥

फणधरभूधरवारणविग्रहविधृतप्रपञ्चसारोऽहम् ।
फालतलोदितलोचनपावकपरिभूतपञ्चबाणोऽहम् ॥ १३२ ॥

बद्धो भवामि नाहं बन्धान्मुक्तस्तथाऽपि नैवाहम् ।
बोध्यो भवामि नाहं बोधोऽहं नैव बोधको नाहम् ॥ १३३ ॥

भक्तिरहं भजनमहं मुक्तिरहं मुक्तियुक्तिरहमेव ।
भूतानुशासनोऽहं भूतभवद्भव्यमूलभूतोऽहम् ॥ १३४ ॥

मान्योऽहमस्मि महतां मन्दमतीनाममाननीयोऽहम् ।
मदरागमानमोहितमानसदुर्वासनादुरापोऽहम् ॥ १३५ ॥

यजनयजमानयाजकयागमयोऽहं यमादिरहितोऽहम् ।
यमवरुणयक्ष[वासव]राक्षसमरुदीशवह्निरूपोऽहम् ॥ १३६ ॥

रक्षाविधानुशीक्षावीक्षितलीलावलोकमहिमाऽहम् ।
रजनीदिवसविरामस्फुरदनुभूतिप्रमाणसिद्धोऽहम् ॥ १३७ ॥

लक्षणलक्ष्यमयोऽहं लाक्षणिकोऽहं लयादिरहितोऽहम् ।
लाभालाभमयोऽहं लब्धव्यानामलभ्यमानोऽहम् ॥ १३८ ॥

वर्णाश्रमरहितोऽहं वर्णमयोऽहं वरेण्यगण्योऽहम् ।
वाचामगोचरोऽहं वचसामर्थे पदे निविष्टोऽहम् ॥ १३९ ॥

शमदमविरहितमनसां शास्त्रशतैरप्यगम्यमानोऽहम् ।
शरणमहमेव विदुषां शकलीकृतविविधसंशयगणोऽहम् ॥१४०॥

षड्भावविरहितोऽहं षड्गुणरहितोऽहमहितरहितोऽहम् ।
षट्कोशविरहितोऽहं षट्त्रिंशत्तत्त्वजालरहितोऽहम् ॥ १४१ ॥

संवित्सुखात्मकोऽहं समाधिसङ्कल्पकल्पवृक्षोऽहम् ।
संसारविरहितोऽहं साक्षात्कारोऽहमात्मविद्यायाः ॥ १४२ ॥

हव्यमहं कव्यमहं हेयोपादेयभावशून्योऽहम् ।
हरिरहमस्मि हरोऽहं विधिरहमेवास्मि कारणं तेषाम् ॥ १४३ ॥

क्षालितकलुषमयोऽहं क्षपितभवक्लेशजालहृदयोऽहम् ।
क्षान्ताद्यक्षरसुघटितविविधव्यवहारमूलमहमेव ॥ १४४ ॥

बहुभिः किमेभिरुक्तैः अहमेवेदं चराचरं विश्वम् ।
शीकरफेनतरङ्गाः सिन्धोरपराणि न खलु वस्तूनि ॥१४५॥

शरणं न हि मम जननी न पिता न सुता न सोदरा नान्ये ।
परमं शरणमिदं स्यात् चरणं मम मूर्ध्नि देशिकन्यस्तम् ॥१४६॥

आस्ते दैशिकचरणं निरवधिरास्ते तदीक्षणे करुणा ।
आस्ते किमपि यदुक्तं किमतः परमस्ति जन्मसाफल्यम् ॥१४७॥
हिमकरकरौघसान्द्राः काङ्क्षितवरदानकल्पकविशेषाः ।
श्रीगुरुचरणकटाक्षाः शिशिराश्शमयन्ति चित्तसन्तापम् ॥१४८॥
कवलितचञ्चलचेतोगुरुतरमण्डूकजातपरितोषा ।
शेते हृदयगुहायां चिरतरमेकैव चिन्मयी भुजगी ॥ १४९ ॥
मयि सुखबोधपयोधौ महति ब्रह्माण्डबुद्बुदसहस्रम् ।
मायाविशेषशालिनि भूत्वाभूत्वा पुनस्तिरोधत्ते ॥ १५० ॥
गुरुकृपयैव सुनावा प्राक्तनभाग्यप्रवृद्धमारुतया ।
दुस्सहदुःखतरङ्गः तुङ्गस्संसारसागरस्तीर्णः ॥ १५१ ॥
सति तमसि मोहरूपे विश्वमपश्यंस्तदेतदित्यखिलम् ।
उदितवति बोधभानौ किमपि न पश्यामि किंत्विदं चित्रम् ॥१५२
नाहं नमामि देवान् देवानतीत्य न सेवते देवम् ।
न तदनु करोति विधानं तस्मै यतते नमो नमो मह्यम् ॥१५३॥
इत्यात्मबोधलाभं मुहुरप्यनुचिन्त्य मोदमानेन ।
प्रारब्धकर्मणोऽन्ते परं पदं प्राप्यते स्म कैवल्यम् ॥ १५४ ॥
मोहान्धकारहरणं संसारोद्वेलसागरोत्तरणम् ।
स्वात्मनिरूपणमेतत् प्रकरणमिदमकृत दक्षिणामूर्तिः *॥ १५५॥
अज्ञानान्ध्यविहन्ता विरचितविज्ञानपङ्कजोल्लासः ।
मानसगगनतलं मे भासयति श्रीनिवासगुरुभानुः* ॥ १५६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-
श्रीशङ्कराचार्यकृतस्वात्मनिरूपण-
प्रकरणं समाप्तम्.

---

*"दक्षिणामूर्तिः श्रीपरमशिवः" "श्रीनिवासगुरुः श्रीविष्णुगुरुः स एव भानुः सहस्रकिरणः" इति सच्चिदानन्दसरस्वतीविरचितायां टीकायाम्.

# योगतारावली*.

वन्दे गुरूणां चरणारविन्दे सन्दर्शितस्वात्मसुखावबोधे ।
जनस्य ये जाङ्गलिकायमाने संसारहालाहलमोहशान्त्यै ॥ १ ॥

सदाशिवोक्तानि सपादलक्षलयावधानानि वसन्ति लोके ।
नादानुसन्धानसमाधिमेकं मन्यामहे मान्यतमं लयानाम् ॥ २ ॥

सरेचपूरैरनिलस्य कुम्भैः सर्वासु नाडीषु विशोधितासु ।
अनाहताख्यो बहुभिः प्रकारैः अन्तः प्रवर्तेत सदा निनादः ॥ ३ ॥

नादानुसन्धान ! नमोऽस्तु तुभ्यं त्वां साधनं तत्त्वपदस्य जाने ।
भवत्प्रसादात् पवनेन साकं विलीयते विष्णुपदे मनो मे ॥ ४ ॥

जालन्धरोड्डीयनमूलबन्धान् जल्पन्ति कण्ठोदरपायुमूलान् ।
बन्धत्रयेऽस्मिन् परिचीयमाने बन्धः कुतो दारुणकालपाशात् ॥ ५ ॥

ओड्याणजालन्धरमूलबन्धैः उन्निद्रितायामुरगाङ्गनायाम् ।
प्रत्यङ्मुखत्वात् प्रविशन् सुषुम्नां गमागमौ मुञ्चति गन्धवाहः ॥ ६ ॥

उत्थापिताधारहुताशनोल्कैः आकुञ्चनैः शश्वदपानवायोः ।
संतापिताच्चन्द्रमसः पतन्तीं पीयूषधारां पिबतीह धन्यः ॥ ७ ॥

बन्धत्रयाभ्यासविपाकजातां विवर्जितां रेचकपूरकाभ्याम् ।
विशोषयन्तीं विषयप्रवाहं विद्यां भजे केवलकुम्भरूपाम् ॥ ८ ॥

अनाहते चेतसि सावधानैः अभ्यासशूरैरनुभूयमाना ।
संस्तम्भितश्वासमनःप्रचारा सा जृम्भते केवलकुम्भकश्रीः ॥ ९ ॥

सहस्रशः सन्तु हठेषु कुम्भाः सम्भाव्यते केवलकुम्भ एव ।
कुम्भोत्तमे यत्र तु रेचपूरौ प्राणस्य न प्राकृतवैकृताख्यौ ॥ १० ॥

---

*“ नन्दिकेश्वरयोगतारावली ” इति शृङ्गेरीश्रीमठीयकोशे.

त्रिकूटनाम्नि स्तिमितेऽन्तरङ्गे खे स्तम्भिते केवलकुम्भकेन ।
प्राणानिलो भानुशशाङ्कनाड्यौ विहाय सद्यो विलयं प्रयाति॥११

प्रत्याहृतः केवलकुम्भकेन प्रबुद्धकुण्डल्युपभुक्तशेषः ।
प्राणः प्रतीचीनपथेन मन्दं विलीयते विष्णुपदान्तराळे ॥१२॥

निरङ्कुशानां श्वसनोद्गमानां निरोधनैः केवलकुम्भकाख्यैः ।
उदेति सर्वेन्द्रियवृत्तिशून्यो मरुल्लयः कोऽपि महामतीनाम् ॥१३॥

न दृष्टिलक्ष्याणि न चित्तबन्धो न देशकालौ न च वायुरोधः ।
न धारणाध्यानपरिश्रमो वा समेधमाने सति राजयोगे ॥१४॥

अशेषदृश्योज्झितदृङ्मयानां अवस्थितानामिह राजयोगे ।
न जागरो नापि सुषुप्तिभावो न जीवितं नो मरणं विचित्रम् ॥१५

अहंममत्वाद्यपहाय सर्वं श्रीराजयोगे स्थिरमानसानाम् ।
न द्रष्टृता नापि च दृश्यभावः सा जृम्भते केवलसंविदेव ॥ १६ ॥

नेत्रे ययोन्मेषनिमेषशून्ये वायुर्यया वर्जितरेचपूरः ।
मनश्च सङ्कल्पविकल्पशून्यं मनोन्मनी सा मयि सन्निधत्ताम्॥१७॥

चित्तेन्द्रियाणां चिरनिग्रहेण श्वासप्रचारे शमिते यमीन्द्राः ।
निवातदीपा इव निश्चलाङ्गाः मनोन्मनीमग्नधियो भवन्ति ॥१८॥

उन्मन्यवस्थाधिगमाय विद्वन्! उपायमेकं तव निर्दिशामः ।
पश्यन्नुदासीनतया प्रपञ्चं संकल्पमुन्मूलय सावधानः ॥ १९ ॥

प्रसह्य संकल्पपरम्पराणां संभेदने सन्ततसावधानम् ।
आलम्बनाशादपचीयमानं शनैः शनैः शान्तिमुपैति चेतः ॥ २० ॥

निश्वासलोपैर्निभृतैः शरीरैः नेत्राम्बुजैरर्धनिमीलितैश्च ।
आविर्भवन्तीममनस्कमुद्रां आलोकयामो मुनिपुङ्गवानाम् ॥ २१ ॥

अमी यमीन्द्राः सहजामनस्कात् अहंममत्वे शिथिलायमाने ।
मनोतिगं मारुतवृत्तिशून्यं गच्छन्ति भावं गगनावशेषम् ॥ २२ ॥

निवर्तयन्तीं निखिलेन्द्रियाणि प्रवर्तयन्तीं परमात्मयोगम् ।
संविन्मयीं तां सहजामनस्कां कदा गमिष्यामि गतान्यभावः॥२३

प्रत्यग्विमर्शातिशयेन पुंसां प्राचीनगन्धेषु पलायितेषु ।
प्रादुर्भवेत् काचिदजाड्यनिद्रा प्रपञ्चचिन्तां परिवर्जयन्ती॥२४॥

विच्छिन्नसंकल्पविकल्पमूले निःशेषनिर्मूलितकर्मजाले ।
निरन्तराभ्यासनितान्तभद्रा सा जृम्भते योगिनि योगनिद्रा ॥२५॥

विश्रान्तिमासाद्य तुरीयतल्पे विश्वाद्यवस्थात्रितयोपरिस्थे ।
संविन्मयीं कामपि सर्वकालं निद्रां सखे निर्विश निर्विकल्पाम्॥२६

प्रकाशमाने परमात्मभानौ नश्यत्यविद्यातिमिरे समस्ते ।
अहो बुधा निर्मलदृष्टयोऽपि किञ्चिन्न पश्यन्ति जगत् समग्रम्॥२७

सिद्धिं तथाविधमनोविलयां समाधौ
श्रीशैलशृङ्गकुहरेषु कदोपलप्स्ये ।
गात्रं यदा मम लताः परिवेष्टयन्ति
कर्णे यदा विरचयन्ति खगाश्च नीडान् ॥ २८ ॥

विचरतु मतिरेषा निर्विकल्पे समाधौ
कुचकलशयुगे वा कृष्णसारेक्षणानाम् ।
चरतु जडमते वा सज्जनानां मते वा
मतिकृतगुणदोषा मां विभुं न स्पृशन्ति ॥२९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्द-
भगवत्पादपूज्यशिष्यश्रीमच्छङ्कराचार्य-
विरचिता योगतारावली
संपूर्णा.



# सर्ववेदान्तसिद्धान्तसारसंग्रहः.



अखण्डानन्दसंबोधो वन्दनाद्यस्य जायते ।
गोविन्दं तमहं वन्दे चिदानन्दतनुं गुरुम् ॥ १

अखण्डं सच्चिदानन्दं अवाङ्मनसगोचरम् ।
आत्मानमखिलाधारं आश्रयेऽभीष्टसिद्धये ॥ २

यदालम्बो दरं हन्ति सतां प्रत्यूहसंभवम् ।
तदालम्बे दयालम्बं लम्बोदरपदाम्बुजम् ॥ ३

अर्थतोऽप्यद्वयानन्दं अतीतद्वैतलक्षणम् ।
आत्माराममहं वन्दे श्रीगुरुं शिवविग्रहम् ॥ ४

वेदान्तशास्त्रसिद्धान्तसारसङ्ग्रह उच्यते ।
प्रेक्षावतां मुमुक्षूणां सुखबोधोपपत्तये ॥ ५

## अनुबन्धचतुष्टयम्.

अस्य शास्त्रानुसारित्वात् अनुबन्धचतुष्टयम ।
यदेव मूलं शास्त्रस्य निर्दिष्टं तदिहोच्यते ॥ ६

अधिकारी च विषयः संबन्धश्च प्रयोजनम् ।
शास्त्रारम्भफलं प्राहुः अनुबन्धचतुष्टयम् ॥ ७

चतुर्भिः साधनैः सम्यक् संपन्नो युक्तिदक्षिणः ।
मेधावी पुरुषो विद्वान् अधिकार्यत्र सम्मतः ॥ ८

विषयः शुद्धचैतन्यं जीवब्रह्मैक्यलक्षणम् ।
यत्रैव दृश्यते सर्ववेदान्तानां समन्वयः ॥ ९

एतदैक्यप्रमेयस्य प्रमाणस्यापि च श्रुतेः ।
संबन्धः कथ्यते सद्भिः बोध्यबोधकलक्षणः ॥ १०

ब्रह्मात्मैकत्वविज्ञानं सन्तः प्राहुः प्रयोजनम् ।
येन निश्शेषसंसारबन्धात् सद्यः प्रमुच्यते ॥ ११

प्रयोजनं संप्रवृत्तेः कारणं फललक्षणम् ।
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥ १२

## साधनचतुष्टयम्.

साधनचतुस्संपत्तिः[1] यस्यास्ति धीमतः पुंसः ।
तस्यैवैतत्फलासिद्धिः नान्यस्य किञ्चिदूनस्य ॥ १३

चत्वारि साधनान्यत्र वदन्ति परमर्षयः ।
मुक्तिर्येषां तु सद्भावे नाभावे सिद्ध्यति ध्रुवम् ॥ १४

आद्यं नित्यानित्यवस्तुविवेकः साधनं मतम् ।
इहामुत्रार्थफलभोगविरागो द्वितीयकम् ॥ १५

शमादिषट्कसंपत्तिः तृतीयं साधनं मतम् ।
तुरीयं तु मुमुक्षुत्वं साधनं शास्त्रसम्मतम् ॥ १६

## नित्यानित्यविवेकः.

ब्रह्मैव नित्यमन्यत्तु ह्यनित्यमिति वेदनम् ।
सोऽयं नित्यानित्यवस्तुविवेक इति कथ्यते ॥ १७

मृदादिकारणं नित्यं त्रिषु कालेषु दर्शनात् ।
घटाद्यनित्यं तत्कार्यं यतस्तन्नाशमीक्षते ॥ १८

तथैवैतज्जगत् सर्वं अनित्यं ब्रह्मकार्यतः ।
तत्कारणं परं ब्रह्म भवेन्नित्यं मृदादिवत् ॥ १९

[1]मातृकाकोशे तु 'चतुष्टयसंपत्तिः' इति पाठः.

सर्गे वक्त्यस्य "तस्माद्वा एतस्मा"दित्यपि श्रुतिः ।
सकाशाद्ब्रह्मणस्तस्मात् अनित्यत्वे न संशयः ॥ २०

सर्वस्यानित्यत्वे सावयवत्वेन सर्वतस्सिद्धे ।
वैकुण्ठादिषु नित्यत्वमतिर्भ्रम एव मूढबुद्धीनाम् ॥ २१

अनित्यत्वं च नित्यत्वं एवं यः श्रुतियुक्तिभिः ।
विवेचनं नित्यानित्यविवेक इति कथ्यते ॥ २२

## विरक्तिः.

ऐहिकामुष्मिकार्थेषु ह्यनित्यत्वेन निश्चयात् ।
नैस्स्पृह्यं तुच्छबुद्धिर्यत् तद्वैराग्यमितीर्यते ॥ २३

नित्यानित्यपदार्थविवेकात् पुरुषस्य जायते सद्यः ।
स्रक्चन्दनवनितादौ सर्वत्रानित्यवस्तुनि विरक्तिः ॥ २४

काकस्य विष्ठावदसह्यबुद्धिः भोग्येषु सा तीव्रविरक्तिरिष्यते ।
विरक्तितीव्रत्वनिदानमाहुः भोग्येषु दोषेक्षणमेव सन्तः ॥ २५

प्रदृश्यते वस्तुनि यत्र दोषः न तत्र पुंसोऽस्ति पुनः प्रवृत्तिः ।
अन्तर्महारोगवतीं विजानन् को नाम वेश्यामपि रूपिणीं व्रजेत् ॥ २६

अत्रापि चान्यत्र च विद्यमानपदार्थसंमर्शनमेव कार्यम् ।
यथाप्रकारार्थगुणाभिमर्शनं मन्दर्शयत्येव तदीयदोषम ॥ २७

कुक्षौ स्वमातुर्मलमूत्रमध्ये स्थितिं तदा विट्क्रिमिदंशनं च ।
तदीयकौक्षेयकवह्निदाहं विचार्य को वा विरतिं न याति ॥२८

स्वकीयविण्मूत्रनिमज्जनं तत् चोत्तानगत्या शयनं तदा यत् ।
बालग्रहाद्याहतिभाक्च शैशवं विचार्य को वा विरतिं न याति॥२९

स्वीयैः परैस्ताडनमज्ञभावं अत्यन्तचापल्यमसत्क्रियां च ।
कुमारभावे प्रतिषिद्धवृत्तिं विचार्य को वा विरतिं न याति ॥३०

मदोद्धतिं मान्यतिरस्कृतिं च कामातुरत्वं समयातिलङ्घनम् ।
तां तां युवस्योदितदुष्टचेष्टां विचार्य को वा विरतिं न याति ॥३१

विरूपतां सर्वजनादवज्ञां सर्वत्र दैन्यं निजबुद्धिहैन्यम् ।
वृद्धत्वसम्भावितदुर्दशां तां विचार्य को वा विरतिं न याति ॥३२

पित्तज्वरार्शःक्षयगुल्मशूलश्लेष्मादिरोगोदिततीव्रदुःखम् ।
दुर्गन्धमस्वास्थ्यमनूनचिन्तां विचार्य को वा विरतिं न याति॥३३

यमावलोकोदितभीतिकम्पमर्मव्यथोच्छ्वासगतीश्च वेदनाम् ।
प्राणप्रयाणे परिदृश्यमानां विचार्य को वा विरतिं न याति ॥३४

अङ्गारनद्यां तपने च कुम्भीपाकेऽपि वीच्यामसिपत्रकानने ।
दूतैर्यमस्य क्रियमाणबाधां विचार्य को वा विरतिं न याति ॥३५

पुण्यक्षये पुण्यकृतो नभस्स्थैः निपात्यमानान् शिथिलीकृताङ्गान् ।
नक्षत्ररूपेण दिवश्च्युतान् तान् विचार्य को वा विरतिं न याति॥

वाय्वर्कवह्नीन्द्रमुखान् सुरेन्द्रान् ईशोग्रभीत्या ग्रथितान्तरङ्गान् ।
विपक्षलोकैः परिदूयमानान् विचार्य को वा विरतिं न याति॥३७

श्रुत्या निरुक्तं सुखतारतम्यं ब्रह्मान्तमारभ्य महामहेशम् ।
औपाधिकं तत्तु न वास्तवं चेत् आलोच्य को वा विरतिं न याति॥

सालोक्यसामीप्यसरूपतादिभेदस्तु सत्कर्मविशेषसिद्धः ।
न कर्मसिद्धस्य तु नित्यतेति विचार्य को वा विरतिं न याति ॥३९

यत्रास्ति लोके गतितारतम्यं उच्चावचत्वान्वितमत्र तत्कृतम् ।
यथेह तद्वत्खलु दुःखमस्तीत्यालोच्य को वा विरतिं न यातिं ॥४०

को नाम लोके पुरुषो विवेकी विनश्वरे तुच्छसुखे गृहादौ ।
कुर्याद्रतिं नित्यमवेक्षमाणो वृथैव मोहान्म्रियमाणजन्तून् ॥ ४१

सुखं किमस्त्यत्र विचार्यमाणे गृहेऽपि वा योषिति वा पदार्थे ।
मायातमोऽन्धीकृतचक्षुषो ये त एव मुह्यन्ति विवेकशून्याः ॥४२

अविचारितरमणीयं सर्वमुदुम्बरफलोपमं भोग्यम् ।
अज्ञानामुपभोग्यं न तु तज्ज्ञानां ..................... ॥ ४३

गतेऽपि तोये सुषिरं कुळीरो हातुं ह्यशक्तो म्रियते विमोहात् ।
यथा तथा गेहसुखानुषक्तः विनाशमायाति नरो भ्रमेण ॥ ४४

कोशक्रिमिस्तन्तुभिरात्मदेहं आवेष्टय चावेष्टय च गुप्तिमिच्छन् ।
स्वयं विनिर्गन्तुमशक्त एव सन् ततस्तदन्ते म्रियते च लग्नः ॥ ४५

यथा तथा पुत्रकळत्रमित्रस्नेहानुबन्धैर्ग्रथितो गृहस्थः ।
कदाऽपि वा तान् परिमुच्य गेहात् गन्तुं न शक्तो म्रियते मुधैव॥

कारागृहस्यास्य च को विशेषः प्रदृश्यते साधु विचार्यमाणे ।
मुक्तेः प्रतीपत्वमिहापि पुंसः कान्तामुखाभ्युत्थितमोहपाशैः ॥

गृहस्पृहा पादनिबद्धशृङ्खला कान्तासुताशा पटुकण्ठपाशः ।
शीर्षे पतद्वर्यशनिर्हि साक्षात् प्राणान्तहेतुः प्रबला धनाशा ॥ ४८

## कामदोषः.

आशापाशशतेन पाशितपदो नोत्थातुमेव क्षमः
कामक्रोधमदादिभिः प्रतिभटैः संरक्ष्यमाणोऽनिशम् ।
संमोहावरणेन गोपनवतः संसारकारागृहात्
निर्गन्तुं त्रिविधेषणापरवशः कः शक्नुयाद्रागिषु ॥ ४९

कामान्धकारेण निरुद्धदृष्टिः मुह्यत्यसत्यप्यबलास्वरूपे ।
न ह्यन्धदृष्टेरसतः सतो वा सुखत्वदुःखत्वविचारणाऽस्ति ॥ ५०

श्लेष्मोद्गारि मुखं स्रवन्मलवती नासाऽश्रुमल्लोचनं
स्वेदस्रावि मलाभिपूर्णमभितो दुर्गन्धदुष्टं वपुः ।
अन्यद्वक्तुमशक्यमेव मनसा मन्तुं कचिन्नार्हति
स्त्रीरूपं कथमीदृशं सुमनसां पात्रीभवेन्नेत्रयोः ॥ ५१

दूरादवेक्ष्याग्निशिखां पतङ्गो रम्यत्वबुद्ध्या विनिपत्य नश्यति ।
यथा तथा नष्टदृगेष सूक्ष्मं कथं निरीक्षेत विमुक्तिमार्गम् ॥ ५२

कामेन कान्तां परिगृह्य तद्वत् जनोऽप्ययं नश्यति नष्टदृष्टिः ।
मांसास्थिमज्जामलमूत्रपात्रं स्त्रियं स्वयं रम्यतयैव पश्यति ॥ ५३

काम एव यमः साक्षात् कान्ता वैतरणी नदी ।
विवेकिनां मुमुक्षूणां निलयस्तु यमालयः ॥ ५४

यमालये वाऽपि गृहेऽपि नो नृणां तापत्रयक्लेशनिवृत्तिरस्ति ।
किञ्चित् समालोक्य तु तद्विरामं सुखात्मना पश्यति मूढलोकः॥५५

यमस्य कामस्य च तारतम्यं विचार्यमाणे महदस्ति लोके ।
हितं करोत्यस्य यमोऽप्रियः सन् कामस्त्वनर्थं कुरुते प्रियः सन्॥५६

यमोऽसतामेव करोत्यनर्थं सतां तु सौख्यं कुरुते हितः सन् ।
कामः सतामेव गतिं निरुन्धन् करोत्यनर्थं ह्यसतां नु का कथा ॥

विश्वस्य वृद्धिं स्वयमेव कांक्षन् प्रवर्तकं कामिजनं ससर्ज ।
तेनैव लोकः परिमुह्यमानः प्रवर्धते चन्द्रमसेव चाब्धिः ॥ ५८

कामो नाम महान् जगद्भ्रमयिता स्थित्वाऽन्तरङ्गे स्वयं
स्त्रीपुंसावितरेतराङ्कगुणैर्हासैश्च भावैः स्फुटम् ।
अन्योन्यं परिमोह्य नैजतमसा प्रेमानुबन्धेन तौ
बद्ध्वा भ्रामयति प्रपञ्चरचनां संवर्धयन् ब्रह्महा ॥ ५९

अतोऽन्तरङ्गस्थितकामवेगात् भोग्ये प्रवृत्तिः स्वत एव सिद्धा ।
सर्वस्य जन्तोर्ध्रुवमन्यथा चेत् अबोधितार्थेषु कथं प्रवृत्तिः ॥ ६०

तेनैव सर्वजन्तूनां कामना बलवत्तरा ।
जीर्यत्यपि च देहेऽस्मिन् कामना नैव जीर्यते ॥ ६१

अवेक्ष्य विषये दोषं बुद्धियुक्तो विचक्षणः ।
कामपाशेन यो मुक्तः स मुक्तेः पथगोचरः ॥ ६२

## कामविजयोपायः.

कामस्य विजयोपायं सूक्ष्मं वक्ष्याम्यहं सताम् ।
संकल्पस्य परित्यागः उपायः सुलभो मतः ॥ ६३

श्रुते दृष्टेऽपि वा भोग्ये यस्मिन् कस्मिंश्च वस्तुनि ।
समीचीनत्वधीत्यागात् कामो नोदेति कर्हिचित् ॥ ६४

कामस्य बीजं संकल्पः संकल्पादेव जायते ।
बीजे नष्टेऽङ्कुर इव तस्मिन् नष्टे विनश्यति ॥ ६५

न कोऽपि सम्यक्त्वधिया विनैव भोग्यं नरः कामयितुं समर्थः ।
यतस्ततः कामजयेच्छुरेतां सम्यक्त्वबुद्धिं विषये निहन्यात् ॥ ६६

भोग्ये नरः कामजयेच्छुरेतां सुखत्वबुद्धिं विषये निहन्यात् ।
यावत् सुखत्वभ्रमधीः पदार्थे तावन्न जेतुं प्रभवेद्धि कामम् ॥ ६७

संकल्पानुदये हेतुः यथाभूतार्थदर्शनम् ।
अनर्थचिन्तनं चाभ्यां नावकाशोऽस्य विद्यते ॥ ६८

रत्ने यदि शिलाबुद्धिः जायते वा भयं ततः ।
समीचीनत्वधीर्नैति नोपादेयत्वधीरपि ॥ ६९

यथार्थदर्शनं वस्तुन्यनर्थस्यापि चिन्तनम् ।
सङ्कल्पस्यापि कामस्य तद्वधोपाय इष्यते ॥ ७०

## धनदोषः.

धनं भयनिबन्धनं सततदुःखसंवर्धनं
प्रचण्डतरकर्दनं स्फुटितबन्धुसंवर्धनम् ।
विशिष्टगुणबाधनं कृपणधीसमाराधनं
न मुक्तिगतिसाधनं भवति नापि हृच्छोधनम् ॥ ७१

राज्ञो भयं चोरभयं प्रमादात् भयं तथा ज्ञातिभयं च वस्तुतः ।
धनं भयग्रस्तमनर्थमूलं यतः सतां तन्न सुखाय कल्पते ॥ ७२

आर्जने रक्षणे दाने व्यये वाऽपि च वस्तुतः ।
दुःखमेव सदा नृणां न धनं सुखसाधनम् ॥ ७३

सतामपि पदार्थस्य लाभाल्लोभः प्रवर्धते ।
विवेको लुप्यते लोभात् तस्मिन् लुप्ते विनश्यति ॥ ७४

दहत्यलाभे निस्स्वत्वं लाभे लोभो दहत्यमुम् ।
तस्मात् सन्तापकं वित्तं कस्य सौख्यं प्रयच्छति ॥ ७५

भोगेन मत्तता जन्तोः दानेन पुनरुद्भवः ।
वृथैवोभयथा वित्तं नास्त्येव गतिरन्यथा ॥ ७६

धनेन मदवृद्धिः स्यात् मदेन स्मृतिनाशनम् ।
स्मृतिनाशाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ ७७

सुखयति धनमेवेत्यन्तराशापिशाच्या
दृढतरमुपगूढो मूढलोको जडात्मा ।
निवसति तदुपान्ते सन्ततं प्रेक्षमाणो
व्रजति तदपि पश्चात् प्राणमेतस्य हृत्वा ॥ ७८

संपन्नोऽन्धवदेव किंचिदपरं नो वीक्षते चक्षुषा
सद्भिर्वर्जितमार्ग एव चरति प्रोत्सारितो बालिशैः ।
तस्मिन्नेव मुहुः स्खलन् प्रतिपदं गत्वाऽन्धकूपे पत-
त्यस्यान्धत्वनिवर्तकौषधमिदं दारिद्र्यमेवाञ्जनम् ॥ ७९

लोभः क्रोधश्च डम्भश्च मदो मत्सर एव च ।
वर्धते वित्तसंप्राप्त्या कथं तच्चित्तशोधनम् ॥ ८०

अलाभाद्द्विगुणं दुःखं वित्तस्य व्ययसंभवे ।
ततोऽपि त्रिगुणं दुःखं दुर्व्यये विदुषामपि ॥ ८१

नित्याहितेन वित्तेन भयचिन्ताऽनपायिना ।
चित्तस्वास्थ्यं कुतो जन्तोः गृहस्थेनाहिना यथा ॥ ८२

कान्तारे विजने वने जनपदे सेतौ निरीतौ च वा
चोरैर्वाऽपि तथेतरैर्नरवरैर्युक्तो वियुक्तोऽपि वा ।
निस्स्वः स्वस्थतया सुखेन वसति ह्याद्रीयमाणो जनैः
क्लिश्नात्येव धनी सदाऽऽकुलमतिर्भीतश्च पुत्रादपि ॥८३

तस्मादनर्थस्य निदानमर्थः पुमर्थसिद्धिर्न भवत्यनेन ।
ततो वनान्ते निवसन्ति सन्तः संन्यस्य सर्वं प्रतिकूलमर्थम् ॥ ८४

## विरक्तिफलोपसंहारः.

श्रद्धाभक्तिमतीं सतीं गुणवतीं पुत्रान् श्रुतान् सम्मतान्
अक्षय्यं वसुधानुभोगविभवैः श्रीसुन्दरं मन्दिरम् ।
सर्वं नश्वरमित्यवेत्य कवयः श्रुत्युक्तिभिर्युक्तिभिः
संन्यस्यन्त्यपरे तु तत् सुखमिति भ्राम्यन्ति दुःखार्णवे ॥ ८५

सुखमिति मलराशौ ये रमन्तेऽत्र गेहे
क्रिमय इव कळत्रक्षेत्रपुत्रानुषक्त्या ।
सुरपद इव तेषां नैव मोक्षप्रसङ्गः
त्वपि तु निरयगर्भावासदुःखप्रवाहः ॥ ८६

येषामाशा निराशा स्यात् दारापत्यधनादिषु ।
तेषां सिद्ध्यति नान्येषां मोक्षाशाभिमुखी गतिः ॥ ८७

सत्कर्मक्षयपाप्मनां श्रुतिमतां सिद्धात्मनां धीमतां
नित्यानित्यपदार्थशोधनमिदं युक्त्या मुहुः कुर्वताम् ।
तस्मादुत्थमहाविरक्त्यसिमतां मोक्षैककांक्षावतां
धन्यानां सुलभं स्त्रि[प्रि]यादिविषयेष्वाशालताच्छेदनम् ॥

संसारमृत्योर्बलिनः प्रवेष्टुं द्वाराणि तु त्रीणि महान्ति लोके ।
कान्ता च जिह्वा कनकं च तानि रुणद्धि यस्तस्य भयं न मृत्योः॥

मुक्तिश्रीनगरस्य दुर्जयतरं द्वारं यदस्यादिमं
तस्य द्वे अररे धनं च युवती ताभ्यां पिनद्धं दृढम् ।
कामाख्यार्गळदारुणा बलवता द्वारं तदेव त्रयं
धीरो यस्तु भिनत्ति सोऽर्हति सुखं भोक्तुं विमुक्तिश्रियः॥

आरूढस्य विवेकाश्वं तीव्रवैराग्यखड्गिनः ।
तितिक्षावर्मयुक्तस्य प्रतियोगी न दृश्यते ॥ ९१

विवेकजां तीव्रविरक्तिमेव मुक्तेर्निदानं निगदन्ति सन्तः ।
तस्माद्विवेकी विरतिं मुमुक्षुः संपादयेत्तां प्रथमं प्रयत्नात् ॥ ९२

पुमानजातनिर्वेदो देहबन्धं जिहासितुम् ।
न हि शक्नोति निर्वेदो बन्धभेदो महानसौ ॥ ९३

वैराग्यरहिता एव यमालय इवालये ।
क्लिश्नन्ति त्रिविधैस्तापैः मोहिता अपि पण्डिताः ॥ ९४

## शमादिसाधननिरूपणम्.

शमो दमस्तितिक्षोपरतिः श्रद्धा ततः परम् ।
समाधानमिति प्रोक्तं षडेवैते शमादयः ॥ ९५

### शमः.

एकवृत्त्यैव मनसः स्वलक्ष्ये नियतस्थितिः ।
शम इत्युच्यते सद्भिः शमलक्षणवेदिभिः ॥ ९६

उत्तमो मध्यमश्चैव जघन्यश्चेति च त्रिधा ।
निरूपितो विपश्चिद्भिः तत्तल्लक्षणवेदिभिः ॥ ९७

स्वविकारं परित्यज्य वस्तुमात्रतया स्थितिः ।
मनसः सोत्तमा शान्तिः ब्रह्मनिर्वाणलक्षणा ॥ ९८

प्रत्यक्प्रत्ययसन्तानप्रवाहकरणं धियः ।
यदेषा मध्यमा शान्तिः शुद्धसत्त्वैकलक्षणा ॥ ९९

विषयव्यापृतिं त्यक्त्वा श्रवणैकमनःस्थितिः ।
मनसश्चेतरा शान्तिः मिश्रसत्त्वैकलक्षणा ॥ १००

प्राच्योदीच्याङ्गसद्भावे शमः सिद्ध्यति नान्यथा ।
तीव्रा विरक्तिः प्राच्याङ्गं उदीच्याङ्गं दमादयः ॥ १०१

कामः क्रोधश्च लोभश्च मदो मोहश्च मत्सरः ।
न जिताः षडिमे येन तस्य शान्तिर्न सिध्यति ॥ १०२

शब्दादिविषयेभ्यो यः विषवत् न निवर्तते ।
तीव्रमोक्षेच्छया भिक्षुः तस्य शान्तिर्न सिद्ध्यति ॥ १०३

येन नाराधितो देवो यस्य नो गुर्वनुग्रहः ।
न वश्यं हृदयं यस्य तस्य शान्तिर्न सिद्ध्यति ॥ १०४

## मनःप्रसादसाधनम्.

मनःप्रसादसिद्ध्यर्थं साधनं श्रूयतां बुधैः ।
मनःप्रसादो यत्सत्त्वे यदभावे न सिध्यति ॥ १०५

ब्रह्मचर्यमहिंसा च दया भूतेष्ववक्रता ।
विषयेष्वतिवैतृष्ण्यं शौचं दम्भविवर्जनम् ॥ १०६

सत्यं निर्ममता स्थैर्यं अभिमानविसर्जनम् ।
ईश्वरध्यानपरता ब्रह्मविद्भिः सहस्थितिः ॥ १०७

ज्ञानशास्त्रैकपरता समता सुखदुःखयोः ।
मानानासक्तिरेकान्तशीलता च मुमुक्षुता ॥ १०८

यस्यैतद्विद्यते सर्वं तस्य चित्तं प्रसीदति ।
न त्वेतद्धर्मशून्यस्य प्रकारान्तरकोटिभिः ॥ १०९

## ब्रह्मचर्यम्.

स्मरणं दर्शनं स्त्रीणां गुणकर्मानुकीर्तनम् ।
समीचीनत्वधीस्तासु प्रीतिः संभाषणं मिथः ॥ ११०

सहवासश्च संसर्गः अष्टधा मैथुनं विदुः ।
एतद्विलक्षणं ब्रह्मचर्यं चित्तप्रसादकम् ॥ १११

## अहिंसा.

अहिंसा वाङ्मनःकायैः प्राणिमात्राप्रपीडनम् ।
स्वात्मवत् सर्वभूतेषु कायेन मनसा गिरा ॥ ११२

## दया, अवक्रता.

अनुकम्पा दया सैव प्रोक्ता वेदान्तवेदिभिः ।
करणत्रितयेष्वेकरूपताऽवक्रता मता ॥ ११३

## वैतृष्ण्यम्.

ब्रह्मादिस्थावरान्तेषु वैराग्यं विषयेष्वनु ।
यथैव काकविष्ठायां वैराग्यं तद्धि निर्मलम् ॥ ११४

## शौचम्.

बाह्यमाभ्यन्तरं चेति द्विविधं शौचमुच्यते ।
मृज्जलाभ्यां कृतं शौचं बाह्यं शारीरकं स्मृतम् ॥ ११५

अज्ञानदूरीकरणं मानसं शौचमान्तरम् ।
अन्तश्शौचे स्थिते सम्यक् बाह्यं नावश्यकं नृणाम् ॥ ११६

## दम्भः.

ध्यानपूजादिकं लोके द्रष्टैव करोति यः ।
पारमार्थिकधीहीनः स दम्भाचार उच्यते ॥ ११७
पुंसस्तथाऽनाचरणं अदाम्भित्वं विदुर्बुधाः ।

## सत्यम्.

यत्स्वेन दृष्टं सम्यक्च श्रुतं तस्यैव भाषणम् ॥ ११८
सत्यमित्युच्यते ब्रह्म सत्यमित्यभिभाषणम् ।

## निर्ममता.

देहादिषु स्वकीयत्वदृढबुद्धिविमर्जनम ॥ ११९
निर्ममत्वं स्मृतं येन कैवल्यं लभते बुधः ।

## स्थैर्यम्.

गुरुवेदान्तवचनैः निश्चितार्थे दृढस्थितिः ॥ १२०
तदेकवृत्त्या तत्स्थैर्यं नैश्चल्यं न तु वर्ष्मणः ।

## अभिमानविसर्जनम्.

विद्यैश्वर्यतपोरूपकुलवर्णाश्रमादिभिः ॥ १२१
संजाताहंकृतेस्त्यागः त्वभिमानविसर्जनम ।

## ईश्वरध्यानम्.

त्रिभिश्च करणैः सम्यक् हित्वा वैषयिकीं क्रियाम ॥ १२२
स्वात्मैकचिन्तनं यत्तत् ईश्वरध्यानमीरितम ।

## ब्रह्मवित्सहवासः.

छायेव सर्वदा वासः ब्रह्मविद्भिः सह स्थितिः ॥ १२३

## ज्ञाननिष्ठा.

यद्यदुक्तं ज्ञानशास्त्रे श्रवणादिकर्मेषु यः ।
निरतः कर्मधीहीनः ज्ञाननिष्ठस्स एव हि ॥ १२४

## समत्वम्.

धनकान्ताज्वरादीनां प्राप्तकाले सुखादिभिः ।
विकारहीनतैव स्यात् सुखदुःखसमानता ॥ १२५

## माननाऽसक्तिः.

श्रेष्ठं पूज्यं विदित्वा मां मानयन्तु जना भुवि ।
इत्यासक्त्या विहीनत्वं मानानासक्तिरुच्यते ॥ १२६

## एकान्तशीलता.

सच्चिन्तनस्य संबाधो विघ्नोऽयं निर्जने ततः ।
स्थेयमित्येक एवास्मि चेत्सैवैकान्तशीलता ॥ १२७

## मुमुक्षुता.

संसारबन्धनिर्मुक्तिः कदा झडिति मे भवेत् ।
इति या सुदृढा बुद्धिः ईरिता सा मुमुक्षुता ॥ १२८

## दमः.

ब्रह्मचर्यादिभिर्धर्मैः बुद्धेर्दोषनिवृत्तये ।
दण्डनं दम इत्याहुः मनस्शान्तिसाधनम् ॥ १२९

इन्द्रियेष्विन्द्रियार्थेषु प्रवृत्तेषु यदृच्छया ।
अनुधावति तान्येव मनो वायुमिवानलः ॥ १३०

इन्द्रियेषु निरुद्धेषु त्यक्त्वा वेगं मनस्स्वयम् ।
सत्वभावमुपादत्ते प्रसादस्तेन जायते ॥ १३१

प्रसन्ने सति चित्तेऽस्य मुक्तिस्सिध्यति नान्यथा ।
मनःप्रसादस्य निदानमेव निरोधनं यत्सकलेन्द्रियाणाम् ।
बाह्येन्द्रिये साधु निरुध्यमाने बाह्यार्थभागो मनसो वियुज्यते॥१३२

तेन स्वंदौष्ट्यं परिमुच्य चित्तं शनैश्शनैश्शान्तिमुपाददाति ।
चित्तस्य बाह्यार्थविमोक्षमेव मोक्षं विदुर्मोक्षणलक्षणज्ञाः ॥ १३३

दमं विना साधु मनःप्रसादहेतुं न विद्मस्सुकरं मुमुक्षोः ।
दमेन चित्तं निजदोषजातं विसृज्य शान्तिं समुपैति शीघ्रम्॥१३४

प्राणायामाद्भवति मनसो निश्चलत्वं प्रसादो
यस्याप्यस्य प्रतिनियतदिग्देशकालाद्यवेक्ष्य ।
सम्यग्दृष्ट्या क्वचिदपि तया नो दमो हन्यते तत्
कुर्याद्धीमान् दममनलसश्चित्तशान्त्यै प्रयत्नात् ॥ १३५

सर्वेन्द्रियाणां गतिनिग्रहेण भोग्येषु दोषाद्यवमर्शनेन ।
ईशप्रसादाच्च गुरोः प्रसादात् शान्तिं समायात्यचिरेण चित्तम् ॥

## तितिक्षा.

आध्यात्मिकादि यद्दुःखं प्राप्तं प्रारब्धवेगतः ।
अचिन्तया तत्सहनं तितिक्षेति प्रचक्षते ॥ १३७

शीक्षा तितिक्षा सदृशी मुमुक्षोः न विद्यतेऽसौ पविना न भिद्यते।
यामेव धीराः कवचीय विघ्नान् सर्वांस्तृणीकृत्य जयन्ति मायाम्॥

क्षमावतामेव हि योगसिद्धिः स्वाराज्यलक्ष्मीसुखभोगसिद्धिः ।
क्षमाविहीना निपतन्ति विघ्नैः वातैर्हताः पर्णचया इव द्रुमात् ॥

तितिक्षया तपो दानं यज्ञं तीर्थं व्रतं श्रुतम् ।
भूतिस्स्वर्गोऽपवर्गश्च प्राप्यते तत्तदर्थिभिः ॥ १४०

ब्रह्मचर्यमहिंसा च साधनामपि चार्हणम् ।
पराक्षेपादिसहनं तितिक्षोरेव सिद्ध्यति ॥ १४१

साधनेष्वपि सर्वेषु तितिक्षोत्तमसाधनम् ।
यत्र विघ्नाः पलायन्ते दैविका अपि भौतिकाः ॥ १४२

तितिक्षोरेव विघ्नेभ्यः त्वनिवर्तितचेतसः ।
सिध्यन्ति सिद्धयस्सर्वा अणिमाद्याः समृद्धयः ॥ १४३

तस्मान्मुमुक्षोरधिका तितिक्षा संपादनीयेप्सितकार्यसिद्ध्यै ।
तीव्रा मुमुक्षा च महत्युपेक्षा चोभे तितिक्षा सहकारि कारणम् ॥

तत्तत्कालसमागतामयततेश्शान्त्यै प्रवृत्तो यदि
स्यात्तत्तत्परिहारकौषधरतस्तच्चिन्तने तत्परः ।
तद्भिक्षुश्श्रवणादिधर्मरहितो भूत्वा मृतश्चेत्ततः
किं सिद्धं फलमाप्नुयादुभयथा भ्रष्टो भवेत्स्वार्थतः॥ १४५

योगमभ्यस्यतो भिक्षोः योगाच्चलितमानसः ।
प्राप्य पुण्यकृतान् लोकान् इत्यादि प्राह केशवः ॥ १४६

न तु कृत्वैव संन्यासं तूष्णीमेव मृतस्य हि ।
पुण्यलोकगतिं ब्रूते भगवान्नचास्मात्रतः ॥ १४७

न च संन्यसनादेव सिद्धिं समधिगच्छति ।
इत्यनुष्ठेयसंत्यागात् सिद्ध्यभावमुवाच च ॥ १४८

तस्मात्तितिक्षया सोढ्वा तत्तद्दुःखमुपागतम् ।
कुर्याच्छक्त्यनुरूपेण श्रवणादि शनैश्शनैः ॥ १४९

प्रयोजनं तितिक्षायाः साधितायाः प्रयत्नतः ।
प्राप्तदुःखासहिष्णुत्वे न किंचिदपि दृश्यते ॥ १५०

## संन्यासः.

साधनत्वेन दृष्टानां सर्वेषामपि कर्मणाम् ।
विधिना यः परित्यागः स संन्यासस्सतां मतिः ॥ १५१

उपरमयति कर्माणीत्युपरतिशब्देन कथ्यते न्यासः ।
न्यासेन हि सर्वेषां श्रुत्या प्राप्तो विकर्मणां त्यागः ॥ १५२

कर्मणा साध्यमानस्यानित्यत्वं श्रूयते यतः ।
कर्मणाऽनेन किं नित्यफलेप्सोः परमार्थिनः ॥ १५३

उत्पाद्यमाप्यं संस्कार्यं विकार्यं परिगण्यते ।
चतुर्विधं कर्मसाध्यं फलं नान्यदितः परम् ॥ १५४

नैतदन्यतरं ब्रह्म कदा भवितुमर्हति ।
स्वतस्सिद्धं सर्वदाऽऽप्तं शुद्धं निर्मलमक्रियम् ॥ १५५

न चास्य कश्चिज्जनितेत्यागमेन निषिध्यते ।
कारणं ब्रह्म तत्तस्मात् ब्रह्म नोत्पाद्यमिष्यते ॥ १५६

आप्त्राप्ययोस्तु भेदश्चेत् आप्त्रा चाप्यमवाप्यते ।
आप्तृस्वरूपमेवैतत् ब्रह्म नाप्यं कदाचन ॥ १५७

मलिनस्यैव संस्कारो दर्पणादेरिहेष्यते ।
व्योमवन्नित्यशुद्धस्य ब्रह्मणो नैव संस्क्रिया ॥ १५८

केन दुष्टेन युज्येत वस्तु निर्मलमक्रियम् ।
यद्योगादागतं दोषं संस्कारो विनिवर्तयेत् ॥ १५९

निर्गुणस्य गुणाधानं अपि नैवोपपद्यते ।
केवलो निर्गुणश्चेति नैर्गुण्यं श्रूयते यतः ॥ १६०

सावयवस्य क्षीरादेः वस्तुनः परिणामिनः ।
येन केन विकारित्वं स्यान्नो निष्कर्मवस्तुनः ॥ १६१

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
इत्येव वस्तुनस्तत्त्वं श्रुतियुक्तिव्यवस्थितम् ॥ १६२

तस्मान्न कर्मसाध्यत्वं ब्रह्मणोऽस्ति कुतश्चन ।
कर्मसाध्यं त्वनित्यं हि ब्रह्म नित्यं सनातनम् ॥ १६३

देहादिः क्षीयते लोको यथैवं कर्मणा चितः ।
तथैवामुष्मिको लोको सञ्चितः पुण्यकर्मणा ॥ १६४

कृतकत्वमनित्यत्वे हेतुर्जागर्ति सर्वदा ।
तस्मादनित्ये स्वर्गादौ पण्डितः को नु मुह्यति ॥ १६५

जगद्धेतोस्तु नित्यत्वं सर्वेषामपि सम्मतम् ।
जगद्धेतुत्वमस्यैव वावदीति श्रुतिर्मुहुः ॥ १६६

ऐतदात्म्यमिदं सर्वं तत्सत्यमिति च श्रुतिः ।
अस्यैव नित्यतां ब्रूते जगद्धेतोस्मतः स्फुटम् ॥ १६७

न कर्मणा न प्रजया धनेनेति स्वयं श्रुतिः ।
कर्मणो मोक्षहेतुत्वं साक्षादेव निषेधति ॥ १६८

प्रत्यग्ब्रह्मविचारपूर्वमुभयोरेकत्वबोधाद्विना
कैवल्यं पुरुषस्य सिध्यति परब्रह्मात्मतालक्षणम् ।
न स्नानैरपि कीर्तनैरपि जपैर्नो कृच्छ्रचान्द्रायणैः
नो वाऽप्यध्वरयज्ञदाननिगमैर्नो मन्त्रतन्त्रैरपि ॥ १६९

ज्ञानादेव तु कैवल्यं इति श्रुत्या निगद्यते ।
ज्ञानस्य मुक्तिहेतुत्वं अन्यव्यावृत्तिपूर्वकम् ॥ १७०

विवेकिनो विरक्तस्य ब्रह्मानित्यत्ववेदिनः ।
तद्भावेच्छोरनित्यार्थे तत्सामग्र्ये कुतोऽरतिः ॥ १७१

तस्मादनित्ये स्वर्गादौ साधनत्वेन चोदितम् ।
नित्यं नैमित्तिकं चापि सर्वं कर्म ससाधनम् ॥ १७२

मुमुक्षुणा परित्याज्यं ब्रह्मभावमभीप्सुना ।
मुमुक्षोरपि कर्मास्तु श्रवणं चापि साधनम् ॥ १७३

हस्तवद्द्वय[द्वय]मेतस्य स्वकार्यं साधयिष्यति ।
यथा विजृम्भते दीपः ऋजूकरणकर्मणा ॥ १७४

तथा विजृम्भते बोधः पुंसो विहितकर्मणा ।
अतस्मापेक्षितं ज्ञानं अथवाऽपि समुच्चयम् ॥ १७५

मोक्षस्य साधनमिति वदन्ति ब्रह्मवादिनः ।
मुमुक्षोर्युज्यते त्यागः कथं विहितकर्मणः ॥ १७६

इति शङ्का न कर्तव्या मूढवत्पण्डितोत्तमैः ।
कर्मणः फलमन्यत्तु श्रवणस्य फलं पृथक् ॥ १७७

वैलक्षण्यं च सामग्र्योः चोभयत्राधिकारिणः ।
कामी कर्मण्यधिकृतः निष्कामी श्रवणे मतः ॥ १७८

अर्थी समर्थ इत्यादि लक्षणं कर्मिणो मतम् ।
परीक्ष्य लोकानित्यादि लक्षणं मोक्षकाङ्क्षिणः ॥ १७९

मोक्षाधिकारी संन्यासी गृहस्थः किल कर्मणि ।
कर्मणस्साधनं भार्यास्रुक्स्रुवादिपरिग्रहः ॥ १८०

नैवास्य साधनापेक्षा शुश्रूषोस्तु गुरुं विना ।
उपर्युपर्यहङ्कारो वर्धते कर्मणा भृशम् ॥ १८१

अहङ्कारस्य विच्छित्तिः श्रवणेन प्रतिक्षणम् ।
प्रवर्तकं कर्मशास्त्रं ज्ञानशास्त्रं निवर्तकम् ॥ १८२

इत्यादिवैपरीत्यं तत् साधने चाधिकारिणोः ।
द्वयोः परम्परापेक्षा विद्यते न कदाचन ॥ १८३

सामग्र्योश्चोभयोस्तद्वत् उभयत्राधिकारिणोः ।
ऊर्ध्वं नयति विज्ञानं अधः प्रापयति क्रिया ॥ १८४

कथमन्योन्यसापेक्षा कथं वाऽपि समुच्चयः ।
यथाऽग्नेस्तृणकूटस्य तेजसस्तिमिरस्य च ॥ १८५

सहयोगो न घटते तथैव ज्ञानकर्मणोः ।
किमुपकुर्याज्ज्ञानस्य कर्म स्वमतियोगिनः ॥
यस्य सन्निधिमात्रेण स्वयं न स्फूर्तिमिच्छति ॥ १८६

कोटीन्धनाद्रिज्वलितोपि वह्निः अर्कस्य नार्हत्युपकर्तुमीषत् ।
यथा तथा कर्मसहस्रकोटिः ज्ञानस्य किं नु स्वयमेव लीयते॥१८७

एककर्त्राश्रयौ हस्तौ कर्मण्यधिकृतावुभौ ।
सहयोगस्तयोर्युक्तो न तथा ज्ञानकर्मणोः ॥ १८८

कर्त्रा कर्तुमकर्तुं वाऽप्यन्यथा कर्म शक्यते ।
न तथा वस्तुनो ज्ञानं कर्तृतन्त्रं कदाचन ॥ १८९

यथा वस्तु तथा ज्ञानं प्रमाणेन विजायते ।
नापेक्षते च यत्किंचित कर्म वा युक्तिकौशलम् ॥ १९०

ज्ञानस्य वस्तुतन्त्रत्वे संशयाद्युदयः कथम् ।
अतो न वास्तवं ज्ञानं इति नो शङ्क्यतां बुधैः ॥ १९१

प्रमाणासौष्ठवकृतं संशयादि न वास्तवम् ।
वस्तु तावत्परं ब्रह्म नित्यं सत्यं ध्रुवं विभु ॥ १९२
श्रुतिप्रमाणे तज्ज्ञानं स्यादेव निरपेक्षकम् ॥

रूपज्ञानं यथा सम्यक् दृष्टौ सत्यां भवेत्तथा ।
श्रुतिप्रमाणे सत्येव ज्ञानं भवति वास्तवम् ॥ १९३

न कर्म यत्किंचिदपेक्षते हि रूपोपलब्धौ पुरुषस्य चक्षुः ।
ज्ञानं तथैव श्रवणादिजन्यं वस्तुप्रकाशे निरपेक्षमेव ॥ १९४

कर्तृतन्त्रं भवेत्कर्म कर्मतन्त्रं शुभाशुभम् ।
प्रमाणतन्त्रं विज्ञानं मायातन्त्रमिदं जगत् ॥ १९५

विद्यां चाविद्यां चेति महोक्तिरियमुपक्रमतां ? सद्भिः ।
सत्कर्मोपासनयोः न त्वात्मज्ञानकर्मणोः क्वापि ॥ १९६

नित्यानित्यपदार्थबोधरहितो यश्चोभयत्र स्रगा-
द्यर्थानामनुभूतिलग्नहृदयो निर्विण्णबुद्धिर्जनः ।
तस्यैवास्य जडस्य कर्म विहितं श्रुत्या विरज्याभितो
मोक्षेच्छोर्न विधीयते तु परमानन्दार्थिनः धीमतः ॥१९७

मोक्षेच्छया यदहरेव विरज्यतेऽसौ
न्यासस्तदैव विहितो विदुषो मुमुक्षोः ।
श्रुत्या तथैव परया च ततस्सुधीभिः
प्रामाणिकोऽयमिति चेतसि निश्चितव्यम् ॥ १९८

स्वापरोक्ष्यस्य वेदादेः साधनत्वं निषेधति ।
नाहं वेदैर्न तपसेत्यादिना भगवानपि ॥ १९९

प्रवृत्तिश्च निवृत्तिश्च द्वे एते श्रुतिगोचरे ।
प्रवृत्त्या बध्यते जन्तुः निवृत्त्या तु विमुच्यते ॥ २००

यन्न स्वबन्धोऽभिमतो मृहस्यापि कस्यचिन्नरः ।
निवृत्तिः कर्मसंन्यासः कर्तव्यो मोक्षकांक्षिभिः ॥ २०१

न ज्ञानकर्मणोर्यस्मात् सहयोगस्तु युज्यते ।
तस्मात्त्याज्यं प्रयत्नेन कर्म ज्ञानेच्छुना ध्रुवम् ॥ २०२

इष्टसाधनताबुद्ध्या गृहीतस्यापि वस्तुनः ।
विज्ञाय फल्गुतां पश्चात् कः पुनस्तत्प्रतीक्षते ॥ २०३

उपरतिशब्दो ह्युपरमणं पूर्वदृष्टवृत्तिभ्यः ।
सोऽयं मुख्यो गौणः चेति च वृत्त्या द्विरूपतां धत्ते ॥ २०४

वृत्तेर्दृश्यपरित्यागो मुख्यार्थ इति कथ्यते ।
गौणार्थः कर्मसंन्यासः श्रुतेरङ्गतया मतः ॥ २०५

पुंसः प्रधानसिद्ध्यर्थं अङ्गस्याश्रयणं ध्रुवम् ।
कर्तव्यमङ्गहीनं चेत् प्रधानं नैव सिध्यति ॥ २०६

संन्यसेत सुविरक्तस्सन् इहामुत्रार्थतस्सुखात् ।
अविरक्तस्य संन्यासो निष्फलोऽयाज्ययागवत् ॥ २०७

संन्यस्य तु यतिः कुर्यात् न पूर्वविषयस्मृतिम् ।
तांतां तत्स्मरणे तस्य जुगुप्सा जायते यतः ॥ २०८

## श्रद्धा.

गुरुवेदान्तवाक्येषु बुद्धिर्या निश्चयात्मिका ।
सत्यमित्येव सा श्रद्धा निदानं मुक्तिसिद्धये ॥ २०९

श्रद्धावतामेव सतां पुमर्थः समीरितस्सिद्ध्यति नेतरेषाम् ।
उक्तं सुसूक्ष्मं परमार्थतत्त्वं श्रद्धत्स्व सोम्येति च वक्ति वेदः॥२१०

श्रद्धाविहीनस्य तु न प्रवृत्तिः प्रवृत्तिशून्यस्य न साध्यसिद्धिः ।
अश्रद्धयैवाभिहताश्च सर्वे मज्जन्ति संसारमहासमुद्रे ॥ २११

दैवे च वेदे च गुरौ च मन्त्रे तीर्थे महात्मन्यपि भेषजे च ।
श्रद्धा भवत्यस्य यथा यथाऽन्तः तथा तथा सिद्धिरुदेति पुंसाम् ॥

अस्तीत्येवोपलब्धव्यं वस्तुसद्भावनिश्चयात् ।
सद्भावनिश्चयस्तस्य श्रद्धया शास्त्रसिद्धया ॥ २१३

तस्माच्छ्रद्धा सुसंपाद्या गुरुवेदान्तवाक्ययोः ।
मुमुक्षोः श्रद्दधानस्य फलं सिद्ध्यति नान्यथा ॥ २१४

यथार्थवादिता पुंसां श्रद्धाजननकारणम् ।
वेदस्येश्वरवाक्यत्वात यथार्थत्वे न संशयः ॥ २१५

मुक्तस्येश्वररूपत्वात् गुरोर्वागपि तादृशी ।
तस्मात्तद्वाक्ययोश्श्रद्धा सतां सिद्ध्यति धीमताम् ॥ २१६

## चित्तसमाधानम्.

श्रुत्युक्तार्थावगाहाय विदुषा ज्ञेयवस्तुनि ।
चित्तस्य सम्यगाधानं समाधानमितीर्यते ॥ २१७

चित्तस्य साध्यैकपरत्वमेव पुमर्थसिद्धेर्नियमेन कारणम् ।
नैवान्यथा सिद्ध्यति साध्यमीपत् मनःप्रमादे विफलः प्रयत्नः ॥

चित्तं च दृष्टिं करणं तथाऽन्यत् एकत्र बध्नाति हि लक्ष्यभेत्ता ।
किंचित्प्रमादे सति लक्ष्यभेत्तुः बाणप्रयोगो विफलो यथा तथा ॥

सिद्धेश्चित्तसमाधानं असाधारणकारणम् ।
यतस्ततो मुमुक्षूणां भवितव्यं सदाऽमुना ॥ २२०

अत्यन्ततीव्रवैराग्यं फललिप्सा महत्तरा ।
तदेतदुभयं विद्यात् समाधानस्य कारणम् ॥ २२१

बहिरङ्गं श्रुतिः प्राह ब्रह्मचर्यादिमुक्तये ।
शमादिषट्कमेवैतत् अन्तरङ्गं विदुर्बुधाः ॥ २२२

अन्तरङ्गं हि बलवत् बहिरङ्गाद्यतस्ततः ।
शमादिषट्कं जिज्ञासोः अवश्यं भाव्यमान्तरम् ॥ २२३

अन्तरङ्गविहीनस्य कृतश्रवणकोटयः ।
न फलन्ति यथा योद्धुः अधीरस्यास्त्रसम्पदः ॥ २२४

## मुमुक्षुत्वम्.

ब्रह्मात्मैकत्वविज्ञानात् यद्विद्वान्मोक्तुमिच्छति ।
संसारपाशबन्धं तत् मुमुक्षुत्वं निगद्यते ॥ २२५

साधनानां तु सर्वेषां मुमुक्षा मूलकारणम् ।
अनिच्छोरप्रवृत्तस्य क्व श्रुतिः क्व नु तत्फलम् ॥ २२६

तीव्रमध्यममन्दातिमन्दभेदाच्चतुर्विधा ।
मुमुक्षा तत्प्रकारोऽपि कीर्त्यते श्रूयतां बुधैः ॥ २२७

तापैस्त्रिभिर्नित्यमनेकरूपैः संतप्यमानः क्षुभितान्तरात्मा ।
परिग्रहं सर्वमनर्थबुद्ध्या जहाति सा तीव्रतरा मुमुक्षा ॥ २२८

तापत्रयं तीव्रमवेक्ष्य वस्तु दृष्ट्वा कळत्रं तनयान्विहातुम् ।
मध्ये द्वयोर्लोडनमात्मनो यत् सैषा मता माध्यमिकी मुमुक्षा॥२२९

मोक्षस्य कालोऽस्ति किमद्य मे त्वरा भुक्त्वैव भोगान् कृतसर्वकार्यः।
मुक्त्यै यतिष्येऽहमथेति बुद्धिः एषैव मन्दा कथिता मुमुक्षा॥२३०

मार्गे प्रयातुर्मणिलाभवन्मे लभेत मोक्षो यदि तर्हि धन्यः ।
इत्याशया मूढधियां मतिर्या सैषाऽतिमन्दाऽभिमता मुमुक्षा॥२३१

जन्मानेकसहस्रेषु तपसाऽऽराधितेश्वरः ।
तेन निश्शेषनिर्धूतहृदयस्थितकल्मषः ॥ २३२

शास्त्रविद्गुणदोषज्ञो भोग्यमात्रे विनिस्पृहः ।
नित्यानित्यपदार्थज्ञो मुक्तिकामो दृढव्रतः ॥ २३३

निष्टप्तमग्निना पात्रं उद्रास्य त्वरया यथा ।
जहाति गेहं तद्वच्च तीव्रमोक्षेच्छया द्विजः ॥ २३४

स एव सद्यस्तरति संसृतिं गुर्वनुग्रहात् ।
यस्तु तीव्रमुमुक्षुस्स्यात् स जीवन्नेव मुच्यते ॥ २३५

जन्मान्तरे मध्यमस्तु तदन्यस्तु युगान्तरे ।
चतुर्थः कल्पकोट्यां वा नैव बन्धाद्विमुच्यते ॥ २३६

नृजन्म जन्तोरतिदुर्लभं विदुः ततोऽपि पुंस्त्वं च ततो विवेकः।
लब्ध्वा तदेतत्त्रितयं महात्मा यतेत मुक्त्यै महसा विरक्तः॥२३७

पुत्रमित्रकळत्रादिसुखं जन्मनि जन्मनि ।
मर्त्यत्वं पुरुषत्वं च विवेकश्च न लभ्यते ॥ २३८

लब्ध्वा सुदुर्लभतरं नरजन्म जन्तुः
तत्रापि पौरुषमतस्सदसद्विवेकम् ।

संप्राप्य चैहिकसुखाभिरतो यदि स्यात्
धिक्तस्य जन्म कुमतेः पुरुषाधमस्य ॥ २३९

खादते मोदते नित्यं शुनकस्सूकरः खरः ।
तेषामेषां विशेषः कः वृत्तिर्येषां तु तैस्समः ॥ २४०

यावन्नाश्रयते रोगो यावन्नाक्रमते जरा ।
यावन्न धीर्विपर्येति यावन्मृत्युं न पश्यति ॥ २४१

तावदेव नरस्स्वस्थः सारग्रहणतत्परः ।
विवेकी प्रयतेताशु भवबन्धविमुक्तये ॥ २४२

देवर्षिपितृमर्त्यर्णबन्धमुक्तास्तु कोटिशः ।
भवबन्धविमुक्तस्तु यः कश्चिद्ब्रह्मवित्तमः ॥ २४३

अन्तर्बन्धेन बद्धस्य किंबहिर्बन्धमोचनैः ।
तदन्तर्बन्धमुक्त्यर्थं क्रियतां कृतिभिः कृतिः ॥ २४४

कृतिपर्यवसानैव मता तीव्रमुमुक्षुता ।
अन्यास्तु रञ्जनामात्रा यत्र नो दृश्यते कृतिः ॥ २४५

गेहादिसर्वमपहाय लघुत्वबुद्ध्या
सौख्येच्छया स्वपिति नाजन्मभाविविक्षोः ।
कान्ताजनस्य नियता मुदृढा त्वरा या
सैषा फलान्तगमने करणं मुमुक्षोः ॥ २४६

नित्यानित्यविवेकश्च देहक्षणिकतामतिः ।
मृत्योर्भीतिश्च तापश्च मुमुक्षावृद्धिकारणम् ॥ २४७

शिरो विवेकस्त्वत्यन्तं वैराग्यं वपुरुच्यते ।
शमाद्यष्षडङ्गानि मोक्षेच्छा प्राण उच्यते ॥ २४८

ईदृशाङ्गसमायुक्तो जिज्ञासुर्युक्तिकोविदः ।
शूरो मृत्युं निहन्त्येव सम्यक् ज्ञानासिना ध्रुवम् ॥ २४९

उक्तसाधनसंपन्नो जिज्ञासुर्यतिरात्मनः ।
जिज्ञासायै गुरुं गच्छेत् समित्पाणिर्नयोज्ज्वलः ॥ २५०

श्रोत्रियो ब्रह्मनिष्ठो यः प्रशान्तस्समदर्शनः ।
निर्ममो निरहङ्कारो निर्द्वन्द्वो निष्परिग्रहः ॥ २५१

अनपेक्षश्शुचिर्दक्षः करुणामृतसागरः ।
एवंलक्षणसंपन्नः स गुरुर्ब्रह्मवित्तमः ॥
उपासाद्यः प्रयत्नेन जिज्ञासोस्साध्यसिद्धये ॥ २५२

जन्मानेकशतैस्सदादरयुजा भक्त्या समाराधितो
भक्तैर्वैदिकलक्षणेन विधिना संतुष्ट ईशः स्वयम् ।
साक्षाच्छ्रीगुरुरूपमेत्य कृपया दृग्गोचरस्सन् प्रभुः
तत्त्वं साधु विबोध्य तारयति तान् संसारदुःखार्णवात्॥२५३

अविद्याहृदयग्रन्थिबन्धमोक्षो भवेद्यतः ।
तमेव गुरुरित्याहुः गुरुशब्दार्थवेदिनः ॥ २५४

शिव एव गुरुस्साक्षात् गुरुरेव शिवस्स्वयम् ।
उभयोरन्तरं किंचित् न द्रष्टव्यं मुमुक्षुभिः ॥ २५५

बन्धमुक्तं ब्रह्मनिष्ठं कृतकृत्यं भजेद्गुरुम् ।
यस्य प्रसादात्संसारसागरो गोष्पदायते ॥ २५६

शुश्रूषया सदा भक्त्या प्रणामैर्विनयोक्तिभिः ।
प्रसन्नं गुरुमासाद्य प्रष्टव्यं ज्ञेयमात्मनः ॥ २५७

भगवन् करुणासिन्धो भवसिन्धोर्भवान् तरिः ।
यमाश्रित्याश्रमेणैव परं पारं गता बुधाः ॥ २५८

जन्मान्तरकृतानन्तपुण्यकर्मफलोदयः ।
अद्य संनिहितो यस्मात् त्वत्कृपापात्रमस्म्यहम् ॥ २५९

संप्रीतिमक्ष्णोर्वदनप्रसादं आनन्दमन्तःकरणस्य सद्यः ।
विलोकनं ब्रह्मविदस्तनोति छिनत्ति मोहं सुगतिं व्यनक्ति ॥२६०

हुताशनानां शशिनामिनानां अप्यर्बुदं वाऽपि न यन्निहन्तुम् ।
शक्नोति तद्ध्वान्तमनन्तमान्तरं हन्त्यात्मवेत्ता सकृदीक्षणेन ॥ २६१

दुष्पारे भवसागरे जनिमृतिव्याध्यादिदुःखोत्कटे
घोरे पुत्रकळत्रमित्रबहुळग्राहाकरे भीकरे ।
कर्मोत्तुङ्गतरङ्गभङ्गनिकरैराकृष्यमाणो मुहुः
यातायातगतिभ्रमेण शरणं किंचिन्न पश्याम्यहम् ॥२६२

केन वा पुण्यशेषेण तव पादाम्बुजद्वयम् ।
दृष्टवानस्मि मामार्तं मृत्योस्त्राहि दयादृशा ॥ २६३

वदन्तमेवं तं शिष्यं दृष्ट्वैव दयया गुरुः ।
दद्यादभयमेतस्मै मा भैष्टेति मुहुर्मुहुः ॥ २६४

विद्वन् मृत्युभयं जहीहि भवतो नास्त्येव मृत्युः क्वचित्
नित्यस्य द्वयवर्जितस्य परमानन्दात्मनो ब्रह्मणः ।
भ्रान्त्या किंचिदवेक्ष्य भीतमनसा मिथ्या त्वया कथ्यते
मां त्राहीति हि सुप्तवत्प्रलपनं शून्यात्मकं ते मृषा ॥२६५

निद्रागाढतमोवृतः किल जनस्स्वप्ने भुजङ्गादिना
ग्रस्तं स्वं समवेक्ष्य यत्प्रलपति त्रामाद्धतोस्मीत्यलम् ।
आप्तेन प्रतिबोधितः करतलेनाताड्य पृष्टस्स्वयं
किंचिन्नेति वदत्यमुष्य वचनं स्यात्तत्किमर्थं वद ॥२६६

रज्जोस्तु तत्त्वमनवेक्ष्य गृहीतसर्प
भावः पुमानयमहिर्वमनीति मोहात् ।
आक्रोशति प्रतिविभेति च कम्पते तत्
मिथ्यैव नात्र भुजंगोस्ति विचार्यमाणे ॥ २६७

तद्वत्त्वयाऽप्यात्मन उक्तमेतत् जन्माप्ययव्याधिजरादिदुःखम् ।
मृषैव सर्वं भ्रमकल्पितं ते सम्यग्विचार्यात्मनि मुञ्च भीतिम्॥२६८

भवाननात्मनो धर्मान् आत्मन्यारोप्य शोचति ।
तदज्ञानकृतं सर्वं भयं त्यक्त्वा सुखी भव ॥ २६९

शिष्यः—

श्रीमद्भिरुक्तं सकलं मृषेति दृष्टान्त एव ह्युपपद्यते तत् ।
दार्ष्टान्तिकेनैव भवादिदुःखं प्रत्यक्षतस्सर्वजनप्रसिद्धम् ॥ २७०

प्रत्यक्षेणानुभूतार्थः कथं मिथ्यात्वमर्हति ।
चक्षुषो विषयं कुम्भं कथं मिथ्या करोम्यहम् ॥ २७१

विद्यमानस्य मिथ्यात्वं कथं नु घटते प्रभो ।
प्रत्यक्षं खलु सर्वेषां प्रमाणं प्रस्फुटार्थकम् ॥ २७२

मर्त्यस्य मम जन्मादिदुःखभाजोल्पजीविनः ।
ब्रह्मत्वमपि नित्यत्वं परमानन्दता कथम् ॥ २७३

क आत्मा कस्त्वनात्मा च किमु लक्षणमेतयोः ।
आत्मन्यनात्मधर्माणां आरोपः क्रियते कथम् ॥ २७४

किमज्ञानं तदुत्पन्नभयत्यागोऽपि वा कथम् ।
किमु ज्ञानं तदुत्पन्नसुखप्राप्तिश्च वा कथम् ॥ २७५

सर्वमेतद्यथापूर्वं करामलकवत्स्फुटम् ।
प्रतिपादय मे स्वामिन् श्रीगुरो करुणानिधे ॥ २७६

श्रीगुरुः—

धन्यः कृतार्थस्त्वमहो विवेकः शिवप्रसादस्तव विद्यते महान् ।
विसृज्य तु प्राकृतलोकमार्गं ब्रह्मावगन्तुं यतसे यतस्त्वम्॥ २७७

शिवप्रसादेन विना न सिद्धिः शिवप्रसादेन विना न बुद्धिः ।
शिवप्रसादेन विना न युक्तिः शिवप्रसादेन विना न मुक्तिः॥२७८

यस्य प्रसादेन विमुक्तसङ्गाः शुकादयस्संसृतिबन्धमुक्ताः ।
तस्य प्रसादो बहुजन्मलभ्यः भक्त्यैकगम्यो भवमुक्तिहेतुः ॥२७९

विवेको जन्तूनां प्रभवति जनिष्वेव बहुषु
प्रसादादेवैशाद्बहुसुकृतपाकोदयवशात् ।
यतस्तस्मादेव त्वमपि परमार्थावगमने
कृतारम्भः पुंसामिदमिह विवेकस्य तु फलम् ॥ २८०

मर्त्यत्वसिद्धेरपि पुंस्त्वसिद्धेः विप्रत्वसिद्धेश्च विवेकसिद्धेः ।
वदन्ति मुख्यं फलमेव मोक्षं व्यर्थं समस्तं यदि चेन्न मोक्षः॥२८१

प्रश्नस्समीचीनतरस्तवायं यदात्मतत्त्वावगमे प्रवृत्तिः ।
ततस्तवैतत्सकलं समूलं निवेदयिष्यामि मुदा शृणुष्व ॥ २८२

## मृषात्वनिरूपणम्.

मर्त्यत्वं त्वयि कल्पितं भ्रमवशात्तेनैव जन्मादयः
तत्संभावितमेव दुःखमपि ते नो वस्तुतस्तन्मृषा ।
निद्रामोहवशादुपागतसुखं दुःखं च किं नु त्वया
सत्यत्वेन विलोकितं क्वचिदपि ब्रूहि प्रबोधागमे ॥ २८३

नाशेषलोकैरनुभूयमानः प्रत्यक्षतोऽयं सकलप्रपञ्चः ।
कथं मृषा स्यादिति शङ्कनीयं विचारशून्येन विमुह्यता त्वया॥२८४

दिवान्धदृष्टेस्तु दिवाऽन्धकारः प्रत्यक्षसिद्धोऽपि स किं यथार्थः ।
तद्वद्भ्रमेणावगतः पदार्थः भ्रान्तस्य सत्यस्स्फुरतेर्मृषैव ॥ २८५

घटोऽयमित्यत्र घटाभिधानः प्रत्यक्षतः कश्चिदुदेति दृष्टः ।
विचार्यमाणे स तु नास्ति तत्र मृदस्ति तद्भावविलक्षणा सा॥२८६

प्रादेशमात्रः परिदृश्यतेऽर्कः शास्त्रेण संदर्शितलक्षयोजनः ।
मानान्तरेण क्वचिदेति बाधां प्रत्यक्षमप्यत्र हि न व्यवस्था ॥२८७

तस्मात्त्वयीदं भ्रमतः प्रतीतं मृषैव नो सत्यमवेहि साक्षात् ।
ब्रह्म त्वमेवासि सुखस्वरूपं त्वत्तो न भिन्नं विचिनुष्व बुद्धौ ॥२८८

लोकान्तरे वाऽत्र गुहान्तरे वा तीर्थान्तरे कर्मपरम्परान्तरे ।
शास्त्रान्तरे नास्त्यनुपश्यतामिह स्वयं परं ब्रह्म विचार्यमाणे॥२८९

तत्त्वमात्मस्थमज्ञात्वा मूढश्शास्त्रेषु मुह्यति ।
गोपः कक्षगतं छागं यथा कूपेषु दुर्मतिः ॥ २९०

स्वमात्मानं परं मत्वा परमात्मानमन्यथा ।
विमृश्यते पुनस्स्वात्मा बहिः कोशेषु पण्डितैः ॥ २९१

विस्मृत्य वस्तुनस्तत्त्वं अध्यारोप्य च वस्तुनि ।
अवस्तुतां च तद्धर्मान् मुधा शोचति नान्यथा ॥ २९२

## आत्मानात्मविवेकः.

आत्मानात्मविवेकं ते वक्ष्यामि शृणु सादरः ।
यस्य श्रवणमात्रेण मुच्यतेऽनात्मबन्धनात् ॥ २९३

इत्युक्त्वाऽभिमुखीकृत्य शिष्यं करुणया गुरुः ।
अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चयन् ॥ २९४

सम्यक्प्राबोधयत्तत्त्वं शास्त्रदृष्टेन वर्त्मना ।
सर्वेषामुपकाराय तत्प्रकारोऽत्र दर्श्यते ॥ २९५

## अध्यारोपः.

वस्तुन्यवस्त्वारोपो यः सोऽध्यारोप इतीर्यते ।
असर्पभूते रज्ज्वादौ सर्पत्वारोपणं यथा ॥ २९६

वस्तुतावत्परं ब्रह्म सत्यज्ञानादिलक्षणम् ।
इदमारोपितं यत्र भाति खे नीलतादिवत् ॥ २९७

## अज्ञानम्.

तत्कारणं यदज्ञानं सकार्यं सद्विलक्षणम् ।
अवस्त्वित्युच्यते सद्भिः यस्य बाधा प्रदृश्यते ॥ २९८

अवस्तु तत्प्रमाणैर्यत् बाध्यते शुक्तिरूप्यवत् ।
न बाध्यते यत्तद्वस्तु त्रिषु कालेषु शुक्तिवत् ॥ २९९

शुक्तेर्बाधा न खल्वस्ति रजतस्य यथा तथा ।
अवस्तुसंज्ञितं यत्तत् जगदध्यासकारणम् ॥ ३००

सदसद्भ्यामनिर्वाच्यं अज्ञानं त्रिगुणात्मकम् ।
वस्तु तद्भावबोधैकबाध्यं तद्भावलक्षणम् ॥ ३०१

मिथ्यासंबन्धतस्तत्र ब्रह्मण्याश्रित्य तिष्ठति ।
मणौ शक्तिर्यथा तद्वत् नैतदाश्रयदूषकम् ॥ ३०२

सद्भावे लिङ्गमेतस्य कार्यमेतच्चराचरम् ।
मानं श्रुतिः स्मृतिश्चाज्ञोऽहमित्यनुभवोऽपि च ॥ ३०३

अज्ञानं प्रकृतिश्शक्तिः अविद्येति निगद्यते ।
तदेतत्सन्न भवति नासद्वा शुक्तिरूप्यवत् ॥ ३०४

सतो भिन्नमभिन्नं वा न दीपस्य प्रभा यथा ।
न सावयवमन्यद्वा बीजस्याङ्कुरवत् क्वचित् ॥ ३०५

अत एतदनिर्वाच्यं इत्येव कवयो विदुः ।
समष्टिव्यष्टिरूपेण द्विधाऽज्ञानं निगद्यते ॥ ३०६

नानात्वेन प्रतीतानां अज्ञानानामभेदतः ।
एकत्वेन समष्टिस्स्यात् भूरुहाणां वनं यथा ॥ ३०७

इयं समष्टिरुत्कृष्टा सत्त्वांशोत्कर्षतः पुरा ।
मायेति कथ्यते सद्भिः शुद्धसत्त्वैकलक्षणा ॥ ३०८

## ईश्वरः.

मायोपहितचैतन्यं साभासं सत्त्वबृंहितम् ।
सर्वज्ञत्वादिगुणकं सृष्टिस्थित्यन्तकारणम् ॥ ३०९

अव्याकृतं तदव्यक्तं ईश इत्यपि गीयते ।
सर्वशक्तिगुणोपेतः सर्वज्ञानावभासकः ॥ ३१०

स्वतन्त्रस्सत्यसङ्कल्पः सत्यकामस्स ईश्वरः ।
तस्यैतस्य महाविष्णोः महाशक्तेर्महीयसः ॥ ३११

सर्वज्ञत्वेश्वरत्वादिकारणत्वान्मनीषिणः ।
कारणं वपुरित्याहुः समष्टिं सत्त्वबृंहितम् ॥ ३१२

आनन्दप्रचुरत्वेन साधकत्वेन कोशवत् ।
सैषाऽऽनन्दमयः कोशः इतीशस्य निगद्यते ॥ ३१३

सर्वोपरमहेतुत्वात् सुषुप्तिस्थानमिष्यते ।
प्राकृतः प्रलयो यत्र श्राव्यते श्रुतिभिर्मुहुः ॥ ३१४

अज्ञानं व्यष्ट्यभिप्रायादनेकत्वेन भिद्यते ।
अज्ञानवृत्तयो नाना तत्तद्गुणविलक्षणाः ॥ ३१५

वनस्य व्यष्ट्यभिप्रायाद्भूरुहा इत्यनेकता ।
यथा तथैवाज्ञानस्य व्यष्टितस्स्यादनेकता ॥ ३१६

समस्तमपि च व्यस्तं गुणैर्यद्व्याप्य तिष्ठति ।
ततस्समष्टिव्यष्टित्वव्यपदेशोऽस्य युज्यते ॥ ३१७

व्यष्टिर्मलिनसत्त्वैषा रजसा तमसा यतः ।

## प्रत्यगात्मा.

ततो निकृष्टा भवति योपाधिः प्रत्यगात्मनः ॥ ३१८

चैतन्यं व्यष्ट्यवच्छिन्नं प्रत्यगात्मेति गीयते ।

## जीवः.

साभासव्यष्ट्युपहितसत्तादात्म्येन तद्गुणैः ॥ ३१९
अभिभूतस्स एवात्मा जीव इत्यभिधीयते ।
किंचिज्ज्ञत्वानीश्वरत्वसंसारित्वादिधर्मवान् ॥ ३२०

अस्य व्यष्टिरहंकारकारणत्वेन कारणम् ।
वपुस्तत्राभिमान्यात्मा प्राज्ञ इत्युच्यते बुधैः ॥ ३२१

प्राज्ञत्वमस्यैकाज्ञानभासकत्वेन सम्मतम् ।
व्यष्टेर्निकृष्टत्वेनास्य नानेकाज्ञानभासकम् ॥ ३२२

स्वरूपाच्छादकत्वेनाप्यानन्दप्रचुरत्वतः ।
कारणं वपुरानन्दमयः कोश इतीर्यते ॥ ३२३

अस्यावस्था सुषुप्तिस्स्यात् यत्रानन्दः प्रकृष्यते ।
एषोऽहं सुखमस्वाप्सं न तु किंचिदवेदिषम् ॥ ३२४

इत्यानन्दसमुत्कृष्टः प्रबुद्धेषु प्रदृश्यते ।
समष्टेरपि च व्यष्टेः उभयोर्वनवृक्षवत् ॥ ३२५

अभेद एव नो भेदः जात्येकत्वेन वस्तुतः ।
अभेद एव ज्ञातव्यः तथेशप्राज्ञयोरपि ॥ ३२६

सत्युपाध्योरभिन्नत्वे क्व भेदस्तद्विशिष्टयोः ।
एकीभावे तरङ्गाद्ये को भेदः प्रतिबिम्बयोः ॥ ३२७

अज्ञानतदवच्छिन्नाभासयोरुभयोरपि ।
आधारं शुद्धचैतन्यं यत्तत्तुर्यमितीर्यते ॥ ३२८

एतदेवाविविक्तं सत् उपाधिभ्यां च तद्गुणैः ।
महावाक्यार्थवाच्यार्थः विविक्तं लक्ष्य इष्यते ॥ ३२९

## जगत्सर्गः.

अनन्तशक्तिसंपन्नो मायोपाधिक ईश्वरः ।
ईक्षामात्रेण सृजति विश्वमेतच्चराचरम् ॥ ३३०

अद्वितीयस्वमात्रोऽसौ निरुपादान ईश्वरः ।
स्वयमेव कथं सर्वं सृजतीति न शङ्क्यताम् ॥ ३३१

निमित्तमप्युपादानं स्वयमेवाभवत् प्रभुः ।
चराचरात्मकं विश्वं सृजत्यवति लुम्पति ॥ ३३२

स्वप्राधान्येन जगतो निमित्तमपि कारणम् ।
उपादानं तथोपाधिप्राधान्येन भवत्ययम् ॥ ३३३

यथा लूता निमित्तं च स्वप्रधानं तथा भवेत् ।
स्वशरीरप्रधानत्वेनोपादानं तथेश्वरः ॥ ३३४

तमःप्रधानप्रकृतिविशिष्टात् परमात्मनः ।

## भूतानि.

अभूत्सकाशादाकाशं आकाशाद्वायुरुच्यते ॥ ३३५

वायोरग्निस्तथैवाग्नेः आपोऽद्भ्यः पृथिवी क्रमात् ।
शक्तेस्तमःप्रधानत्वं तत्कार्ये जाड्यदर्शनात् ॥ ३३६

आरम्भन्ते कार्यगुणान् ये कारणगुणा हि ते ।
एतानि सूक्ष्मभूतानि भूतमात्रा अपि क्रमात् ॥ ३३७

एतेभ्यस्सूक्ष्मभूतेभ्यः सूक्ष्मदेहा भवन्त्यपि ।
स्थूलान्यपि च भूतानि चान्योन्यांशविमेलनात् ॥ ३३८

## लिङ्गशरीरम्.

अपञ्चीकृतभूतेभ्यो जातं सप्तदशाङ्गकम् ।
संसारकारणं लिङ्गं आत्मनो भोगसाधनम् ॥ ३३९

श्रोत्रादिपञ्चकं चैव वागादीनां च पञ्चकम् ।
प्राणादिपञ्चकं बुद्धिमनसी लिङ्गमुच्यते ॥ ३४०

## धीन्द्रियाणि.

श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च जातानि ।
आकाशादीनां सत्त्वांशेभ्यो धीन्द्रियाण्यनुक्रमतः ॥ ३४१

## अन्तःकरणम्.

आकाशादिगताः पञ्च सात्त्विकांशाः परस्परम् ।
मिलित्वैवान्तःकरणं अभवत्सर्वकारणम् ॥ ३४२

प्रकाशकत्वादेतेषां सात्त्विकांशत्वमिष्यते ।
प्रकाशकत्वं सत्त्वस्य स्वच्छत्वेन यतस्ततः ॥ ३४३

तदन्तःकरणं वृत्तिभेदेन स्याच्चतुर्विधम् ।
मनो बुद्धिरहङ्कारः चित्तं चेति तदुच्यते ॥ ३४४

संकल्पान्मन इत्याहुः बुद्धिरर्थस्य निश्चयात् ।
अभिमानादहङ्कारः चित्तमर्थस्य चिन्तनात् ॥ ३४५

मनस्यपि च बुद्धौ च चित्ताहङ्कारयोः क्रमात् ।
अन्तर्भावोऽत्र बोद्धव्यः लिङ्गलक्षणसिद्धये ॥ ३४६

चिन्तनं च मनोधर्मसंकल्पादि यथा ततः ।
अन्तर्भावो मनस्येव सम्यक्चित्तस्य सिद्ध्यति ॥ ३४७

देहादावहमित्येव भावो दृढतरो धियः ।
दृश्यतेऽहंकृतेस्तस्मात् अन्तर्भावोऽत्र बुद्ध्यते ॥ ३४८

तस्मादेव तु बुद्धेः कर्तृत्वं नाहंतस्य कारणत्वम् ।
सिद्ध्यत्यात्मन उभयात् विद्यात्संसारकारणं मोहात् ॥ ३४९

## विज्ञानमयकोशः.

विज्ञानमयकोशस्स्यात् बुद्धिर्ज्ञानेन्द्रियैस्सह ।
विज्ञानप्रचुरत्वेनाप्याच्छादकतयाऽऽत्मनः ॥ ३५०

विज्ञानमयकोशोयं इति विद्वद्भिरुच्यते ।
अयं महानहङ्कारवृतिमान् कर्तृलक्षणः ॥
सर्वसंसारनिर्वोढा विज्ञानमयशब्दभाक् ॥ ३५१

अहं ममेत्येवसदाऽभिमानं देहेन्द्रियादौ कुरुते गृहादौ ।
जीवाभिमानः पुरुषोऽयमेव कर्ता च भोक्ता च सुखी च दुःखी॥ ३५२

स्ववासनाप्रेरित एव नित्यं करोति कर्मोभयलक्षणं च ।
भुङ्क्ते तदुत्पन्नफलं विशिष्टं सुखं च दुःखं च परत्र चात्र॥ ३५३

नानायोनिसहस्रेषु जायमानो मुहुर्मुहुः ।
म्रियमाणो भ्रमत्येव जीवस्संसारमण्डले ॥ ३५४

## मनोमयकोशः.

मनो मनोमयः कोशो भवेत ज्ञानेन्द्रियैस्सह ।
प्राचुर्यं मनसो यत्र दृश्यतेऽसौ मनोमयः ॥ ३५५

चिन्ताविषादहर्षाद्याः कामाद्या अस्य वृत्तयः ।
मनुते मनसैव फलं कामयते बहिः ॥
यतते कुरुते भुङ्क्ते तन्मनस्सर्वकारणम् ॥ ३५६

मनो ह्यमुष्य प्रवणस्य हेतुः अन्तर्बहिश्चार्थमनेन वेत्ति ।
शृणोति जिघ्रत्यमुनैव चक्षते वक्ति स्पृशत्यत्ति करोति सर्वम् ॥ ३५७

बन्धश्च मोक्षो मनसैव पुंसां अर्थोप्यनर्थोप्यमुनैव सिद्ध्यति ।
शुद्धेन मोक्षो मलिनेन बन्धो विवेकतोऽर्थोऽप्यविवेकतोऽन्यः॥ ३५८

रजस्तमोभ्यां मलिनं त्वशुद्धं अज्ञानजं सत्त्वगुणेन रिक्तम् ।
मनस्तमोदोषसमन्वितत्वात् जडत्वमोहालसताप्रमादैः ॥
तिरस्कृतं सन्न तु वेत्ति वास्तवं पदार्थतत्त्वं ह्युपलभ्यमानम् ॥ ३५९

रजोदोषैर्युक्तं यदि भवति विक्षेपकगुणैः
प्रतीपैः कामाद्यैरनिशमभिभूतं व्यथयति ।
कथंचित्सूक्ष्मार्थावगतिमदपि भ्राम्यति भृशं
मनोदीपो यद्वत् प्रबलमरुता ध्वस्तमहिमा ॥ ३६०

ततो मुमुक्षुर्भवबन्धमुक्त्यै रजस्तमोभ्यां च तदीयकार्यैः ।
वियोज्य चित्तं परिशुद्धसत्त्वं प्रियं प्रयत्नेन सदैव कुर्यात् ॥ ३६१

गर्भावासजनिप्रणाशनजराव्याध्यादिषु प्राणिनां
यद्दुःखं परिदृश्यते च नरके तच्चिन्तयित्वा मुहुः ।
दोषानेव विलोक्य सर्वविषयेष्वाशां विमुच्याभितः
चित्तग्रन्थिविमोचनाय सुमतिस्सत्त्वं समालम्बताम् ॥ ३६२

## चित्तप्रसादहेतुः.

यमेषु निरतो यस्तु नियमेषु च यत्नतः ।
विवेकिनस्तस्य चित्तं प्रसादमधिगच्छति ॥ ३६३

आसुरीं सम्पदं त्यक्त्वा भजेद्यो दैवसम्पदम् ।
मोक्षैककाङ्क्षया नित्यं तस्य चित्तं प्रसीदति ॥ ३६४

परद्रव्यपरद्रोहपरनिन्दापरस्त्रियः ।
नालम्बते मनो यस्य तस्य चित्तं प्रसीदति ॥ ३६५

आत्मवत्सर्वभूतेषु यस्समत्वेन पश्यति ।
सुखदुःखं विवेकेन तस्य चित्तं प्रसीदति ॥ ३६६

अत्यन्तं श्रद्धया भक्त्या गुरुमीश्वरमात्मनि ।
यो भजत्यनिशं क्षान्तः तस्य चित्तं प्रसीदति ॥ ३६७

शिष्टान्नमीशार्चनमार्यसेवां
तीर्थाटनं स्वाश्रमधर्मनिष्ठाम् ।
यमानुषक्तिं नियमानुवृत्तिं
चित्तप्रसादाय वदन्ति तज्ज्ञाः ॥ ३६८

## सत्त्ववृद्धिहेतुः.

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
पूतिपर्युषितादीनां त्यागस्सत्त्वाय कल्पते ॥ ३६९

श्रुत्या सत्त्वपुराणानां सेवया सत्त्ववस्तुनः ।
अनुवृत्त्या च साधूनां सत्त्ववृत्तिः प्रजायते ॥ ३७०

यस्य चित्तं निर्विषयं हृदयं यस्य शीतलम् ।
तस्य मित्रं जगत्सर्वं तस्य मुक्तिः करस्थिता ॥ ३७१

हितपरिमितभोजी नित्यमेकान्तसेवी
सकृदुचितहितोक्तिस्स्वल्पनिद्राविहारः ।
अनुनियमनशीलो यो भजत्युक्तकाले
स लभत इह शीघ्रं साधु चित्तप्रसादम् ॥ ३७२

चित्तप्रसादेन विनाऽवगन्तुं बन्धं न शक्नोति परात्मतत्त्वम् ।
तत्त्वावगत्या तु विना विमुक्तिः न सिद्ध्यति ब्रह्मसहस्रकोटिषु ॥

मनोऽप्रसादः पुरुषस्य बन्धो मनःप्रसादो भवबन्धमुक्तिः ।
मनःप्रसादाधिगमाय तस्मात् मनोनिरासं विदधीत विद्वान् ॥

## प्राणमयकोशः.

पञ्चानामेव भूतानां रजोंशेभ्योऽभवन् क्रमात् ।
वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाण्यनु ॥ ३७५

समस्तेभ्यो रजोंशेभ्यो व्योमादीनां क्रियात्मकाः ।
प्राणादयस्समुत्पन्नाः पञ्चाप्यान्तरवायवः ॥ ३७६

प्राणः प्राग्गमनेन स्यात् अपानोऽवाग्गमेन च ।
व्यानस्तु विष्वग्गमनात् उत्क्रान्त्योदान इष्यते ॥ ३७७

अशितान्नरसादीनां समीकरणधर्मतः ।
समान इत्यभिप्रेतो वायुर्यस्तेषु पञ्चमः ॥ ३७८

क्रियैव दृश्यते प्रायः प्राणकर्मेन्द्रियेष्वलम् ।
ततस्तेषां रजोंशेभ्यो जनिरङ्गीकृता बुधैः ॥ ३७९

राजसीं तु क्रियाशक्तिं तमश्शक्तिं जडात्मिकाम् ।
प्रकाशरूपिणीं सत्त्वशक्तिं प्राहुर्महर्षयः ॥ ३८०

एते प्राणादयः पञ्च पञ्चकर्मेन्द्रियैस्सह ।
भवेत्प्राणमयः कोशः स्थूलो येनैव चेष्टते ॥ ३८१

यद्यन्निष्पाद्यते कर्म पुण्यं वा पापमेव वा ।
वागादिभिश्च वपुषा तत्प्राणमयकर्तृकम् ॥ ३८२

वायुनोच्चालितो वृक्षः नानारूपेण चेष्टते ।
तस्मिन्विनिश्चले सोपि निश्चलस्स्याद्यथा तथा ॥ ३८३

प्राणकर्मेन्द्रियैर्देहः प्रेर्यमाणः प्रवर्तते ।
नानाक्रियासु सर्वत्र विहिताविहितादिषु ॥ ३८४

## सूक्ष्मप्रपञ्चः.

कोशत्रयं मिलित्वैतत् वपुस्स्यात् सूक्ष्ममात्मनः ।
अतिसूक्ष्मतया लीनः स्यात्तन्नो गमकत्वतः ॥ ३८५

लिङ्गमित्युच्यते स्थूलापेक्षया सूक्ष्ममिष्यते ।
सर्वं लिङ्गवपुर्जातं एकधीविषयत्वतः ॥ ३८६

समष्टिस्स्यात्तरुगणः सामान्येन वनं यथा ।
एतत्समष्ट्युपहितं चैतन्यं सफलं विभुः ॥ ३८७

हिरण्यगर्भस्सूत्रात्मा प्राण इत्यपि पण्डिताः ।
हिरण्मये बुद्धिगर्भे प्रचकास्ति हिरण्यवत् ॥ ३८८

हिरण्यगर्भ इत्यस्य व्यपदेशस्ततो मतः ।
समस्तलिङ्गदेहेषु सूत्रवन्मणिपङ्क्तिषु ।
व्याप्य स्थितत्वात्सूत्रात्मा प्राणनात्प्राण उच्यते ॥ ३८९

नैकधीविषयत्वेन लिङ्गं व्यष्टीभवत्यथ ।
यदेतद्व्यष्ट्युपहितं चिदाभाससमन्वितम् ॥ ३९०

चैतन्यं तैजस इति निगदन्ति मनीषिणः ।
तेजोमयान्तःकरणोपाधित्वेनैष तैजसः ॥ ३९१

स्थूलात्सूक्ष्मतया व्यष्टिः अस्य सूक्ष्मवपुर्मतम् ।
अस्य जागरसंस्कारमयत्वाद्वपुरुच्यते ॥ ३९२

स्वप्ने जागरकालीनवासनापरिकल्पितान् ।
तैजसो विषयान् भुङ्क्ते सूक्ष्मार्थान् सूक्ष्मवृत्तिभिः ॥ ३९३

समष्टेरपि च व्यष्टेः सामान्येनैव पूर्ववत् ।
अभेद एव ज्ञातव्यः जात्यैकत्वे कुतो भिदा ॥ ३९४

द्वयोरुपाध्योरेकत्वे तयोरप्यभिमानिनोः ।
सूत्रात्मनस्तैजसस्याप्यभेदः पूर्ववन्मतः ॥ ३९५

## स्थूलप्रपञ्चः.

एवं सूक्ष्मप्रपञ्चस्य प्रकारश्शास्त्रसम्मतः ।
अथ स्थूलप्रपञ्चस्य प्रकारः कथ्यते शृणु ॥ ३९६

तान्येव सूक्ष्मभूतानि व्योमादीनि परस्परम् ।
पञ्चीकृतानि स्थूलानि भवन्ति शृणु तत्क्रमम् ॥ ३९७

## पञ्चीकरणम्.

खादीनां भूतमेकैकं सममेव द्विधा द्विधा ।
विभज्य भागं तत्राद्यं त्यक्त्वा भागं द्वितीयकम् ॥ ३९८

चतुर्धा सुविभज्याथ तमेकैकं विनिक्षिपेत् ।
चतुर्णां प्रथमे भागे क्रमेण स्वार्धमन्तरा ॥ ३९९

ततो व्योमादिभूतानां भागाः पञ्च भवन्ति ते ।
स्वस्वार्धभागेनान्येभ्यः प्राप्तं भागचतुष्टयम् ॥ ४००

संयोज्य स्थूलतां यान्ति व्योमादीनि यथाक्रमम् ।
अमुष्य पञ्चीकरणस्याप्रामाण्यं न शङ्क्यताम् ॥ ४०१

उपलक्षणमस्यापि तत्त्रिवृत्करणश्रुतिः ।
पञ्चानामपि भूतानां श्रूयतेऽन्यत्र संभवः ॥ ४०२

ततः प्रामाणिकं पञ्चीकरणं मन्यतां बुधैः ।
प्रत्यक्षादिविरोधस्स्यात् अन्यथा क्रियते यदि ॥ ४०३

आकाशवाय्वोर्धर्मस्तु वह्न्यादावुपलभ्यते ।
यथा तथाऽऽकाशवाय्वोः नाग्न्यादेर्धर्म ईक्ष्यते ॥ ४०४

अतोऽप्रामाणिकमिति न किंचिदपि चिन्त्यतां ।
खांशस्याप्तिश्च खव्याप्तिर्विद्यते पावकादिषु ॥ ४०५

तेनोपलभ्यते शब्दः कारणस्यातिरेकतः ।
तथा नभस्वतो धर्मोप्यग्न्यादावुपलभ्यते ॥ ४०६

न तथा विद्यते व्याप्तिः वह्न्यादेः खनभस्वतोः ।
सूक्ष्मत्वादंशकव्याप्तेः तद्धर्मो नोपलभ्यते ॥ ४०७

कारणस्यानुरूपेण कार्यं सर्वत्र दृश्यते ।
तस्मात्प्रामाण्यमेष्टव्यं बुधैः पञ्चीकृतेरपि ॥ ४०८

## भूतगुणाः.

अनेनोद्भूतगुणकं भूतं वक्ष्येऽवधारय ।
शब्दैकगुणमाकाशं शब्दस्पर्शगुणोऽनिलः ॥ ४०९

तेजश्शब्दस्पर्शरूपैः गुणवत्कारणं क्रमात् ।
आपश्चतुर्गुणश्शब्दस्पर्शरूपरसैः क्रमात् ॥ ४१०
एतैश्चतुर्भिर्गन्धेन सह पञ्चगुणा मही ।

## इन्द्रियसामर्थ्यम्.

आकाशांशतया श्रोत्रं शब्दं गृह्णाति तद्गुणम् ॥ ४११
त्वङ्मारुतांशकतया स्पर्शं गृह्णाति तद्गुणम् ।
तेजोंशकतया चक्षुः रूपं गृह्णाति तद्गुणम् ॥ ४१२

अबंशकतया जिह्वा रसं गृह्णाति तद्गुणम् ।
भूम्यंशकतया घ्राणं गन्धं गृह्णाति तद्गुणम् ॥ ४१३

करोति खांशकतया वाक्शब्दोच्चारणक्रियाम् ।
वाय्वंशकतया पादौ गमनादिक्रियापरौ ॥ ४१४

तेजोंशकतया पाणी वह्न्याद्यर्चनतत्परौ ।
जलांशकतयोपस्थः रेतोमूत्रविसर्गकृत् ॥ ४१५
भूम्यंशकतया पायुः कठिनं मलमुत्सृजेत् ।

## इन्द्रियाधिदैवतानि.

श्रोत्रस्य दैवतं दिक्स्यात् त्वचो वायुर्दृशो रविः ॥ ४१६
जिह्वाया वरुणो दैवं घ्राणस्य त्वश्विनावुभौ ।
वाचोऽग्निर्हस्तयोरिन्द्रः पादयोस्तु त्रिविक्रमः ॥ ४१७

पायोर्मृत्युरुपस्थस्य त्वधिदैवं प्रजापतिः ।
मनसो दैवतं चन्द्रः बुद्धेर्दैवं बृहस्पतिः ॥ ४१८

रुद्रस्त्वहंकृतेर्दैवं क्षेत्रज्ञश्चित्तदैवतम् ।
दिगाद्या देवतास्सर्वाः खादिसत्त्वांशसंभवाः ॥ ४१९

सन्धिता इन्द्रियस्थानेष्विन्द्रियाणि समंततः ।
निगृह्णन्त्यनुगृह्णन्ति प्राणिकर्मानुरूपतः ॥ ४२०

शरीरकरणग्रामप्राणाहमधिदैवतम् ।
पञ्चैते हेतवः प्रोक्ता निष्पत्तौ सर्वकर्मणाम ॥ ४२१

कर्मानुरूपेण गुणश्च यो भवेत् गुणानुरूपेण मनःप्रवृत्तिः ।
मनोनुगस्तैरुभयात्मकेन्द्रियैः निवर्त्यते पुण्यमपुण्यमत्र ॥ ४२२

करोति विज्ञानमयोभिमानं कर्ताऽहमेवेति तदात्मना स्थितः ।
आत्मा तु किंचिन्न करोति साक्षी न कारयत्येव तटस्थवत्सदा ॥

द्रष्टा श्रोता वक्ता कर्ता भोक्ता भवत्यहङ्कारः ।
स्वयमेतद्विकृतीनां साक्षी निर्लेप एवात्मा ॥ ४२४

आत्मनस्साक्षिमात्रत्वं न कर्तृत्वं न भोक्तृता ।
रविवत्प्राणिभिर्लोके क्रियमाणेषु कर्मसु ॥ ४२५

तथैव प्रत्यगात्माऽपि रविवन्निष्क्रियात्मना ।
उदासीनतयैवास्ते देहादीनां प्रवृत्तिषु ॥ ४२६

अज्ञात्वैवं परं तत्त्वं मायामोहितचेतसः ।
स्वात्मन्यारोपयन्त्येतत् कर्तृत्वाद्यन्यगोचरम ॥ ४२७

आत्मस्वरूपमविचार्य विमूढबुद्धिः
आरोपयत्यखिलमेतदनात्मकार्यम ।
स्वात्मन्यसङ्गचितिनिष्क्रिय एव चन्द्रे
दूरस्थमेघकृतधावनवद्भ्रमेण ॥ ४२८

## ब्रह्माण्डसृष्टिः.

आत्मानात्मविवेकं स्फुटतरमग्रे निवेदयिष्यामः ।
इममाकर्णय विद्वन् जगदुत्पत्तिप्रकारमावृत्त्या ॥ ४२९

पञ्चीकृतेभ्यः खादिभ्यः भूतेभ्यस्त्वीक्षयेशितुः ।
समुत्पन्नमिदं स्थूलं ब्रह्माण्डं सचराचरम् ॥ ४३०

व्रीह्याद्योपधयस्सर्वाः वायुतेजोम्बुभूमयः ।
सर्वेपामप्यभूदन्नं चतुर्विधशरीरिणाम् ॥ ४३१

केचिन्मारुतभोजनाः खलु परे चन्द्रार्कतेजोशनाः
केचित्तोयकणाशिनोऽपरिमिताः केचित्तु मृद्भक्षकाः ।
केचित्पर्णशिलातृणादनपराः केचित्तु मांसाशिनः
केचिद्व्रीहियवान्नभोजनपरा जीवन्त्यमी जन्तवः ॥ ४३२

## चतुर्विधजन्तवः.

जरायुजोण्डजस्वेदजोद्भिजाद्याश्चतुर्विधाः ।
स्वस्वकर्मानुरूपेण जातास्तिष्ठन्ति जन्तवः ॥ ४३३

येऽत्र जाता जरायुभ्यः तेन नाद्या जरायुजाः ।
अण्डजास्ते स्युरण्डेभ्यः जाता ये विहगादयः ॥ ४३४

स्वेदाज्जाताः स्वेदजास्ते यूका लूक्षादयोऽपि च ।
भूमिमुद्भिद्य ये जाता उद्भिजास्ते द्रुमादयः ॥ ४३५

इदं स्थूलवपुर्जातं भौतिकं च चतुर्विधम् ।
सामान्येन समष्टिस्स्यात् एकधीविषयत्वतः ॥ ४३६

एतत्समष्ट्यवच्छिन्नं चैतन्यं फलसंयुतम् ।
प्राहुर्वैश्वानर इति विराडिति च वैदिकाः ॥ ४३७

वैश्वानरो विश्वनरेष्वात्मत्वेनाभिमानतः ।
विराट् स्याद्विविधत्वेन स्वयमेव विराजनात् ॥ ४३८

चतुर्विधं भूतजातं तत्तज्जातिविशेषतः ।
नैकधीविषयत्वेन पूर्ववद्व्यष्टिरिष्यते ॥ ४३९

साभासव्यष्ट्युपहितं तत्तादात्म्यमुपागतम् ।
चैतन्यं विश्व इत्याहुः वेदान्तनयकोविदाः ॥ ४४०

विश्वोऽस्मिन् स्थूलदेहेऽत्र स्वाभिमानेन तिष्ठति ।
यतस्ततो विश्व इति नाम्ना सार्थो भवत्ययम् ॥ ४४१

## अन्नमयकोशः.

व्यष्टिरेषाऽस्य विश्वस्य भवति स्थूलविग्रहः ।
उच्यतेऽन्नविकारित्वात् कोशोऽन्नमय इत्ययम् ॥ ४४२

देहोऽयं पितृभुक्तान्नविकाराच्छुक्लशोणितात् ।
जातः प्रवर्धतेऽन्नेन तदभावे विनश्यति ॥ ४४३

तस्मादन्नविकारित्वेनायमन्नमयो मतः ।
आच्छादकत्वादेतस्याप्यसेः कोशवदात्मनः ॥ ४४४

आत्मनः स्थूलभोगानां एतदायतनं विदुः ।
शब्दादिविषयान् भुङ्क्ते स्थूलान् स्थूलात्मनि स्थितः ॥ ४४५

बहिरात्मा ततः स्थूलभोगायतनमुच्यते ।
इन्द्रियैरुपनीतानां शब्दादीनामयं स्वयम् ।
देहेन्द्रियमनोयुक्तः भोक्तेत्याहुर्मनीषिणः ॥ ४४६

एकादशद्वारवतीह देहे
सौधे महाराज इवाक्षवर्गैः ।
संसेव्यमानो विषयोपभोगान्
उपाधिसंस्थो बुभुजेऽयमात्मा ॥ ४४७

ज्ञानेन्द्रियाणि निजदेवतचोदितानि
कर्मेन्द्रियाण्यपि तथा मनआदिकानि ।

स्वस्वप्रयोजनविधौ नियतानि सन्ति
यत्नेन किंकरजना इव तं भजन्ते ॥ ४४८

यत्रोपभुङ्क्ते विषयान् स्थूलानेष महामतिः ।
अहं ममेति चाप्यत्रोभयोरप्यभिमानिनोः ॥ ४४९

तद्विश्ववैश्वानरयोः अभेदः पूर्ववन्मतः ।
स्थूलसूक्ष्मकारणाख्याः प्रपञ्चा ये निरूपिताः ॥ ४५०

ते सर्वेऽपि मिलित्वैकः प्रपञ्चस्तु महान् भवेत् ।
महाप्रपञ्चावच्छिन्नं विश्वप्राज्ञादिलक्षणम् ॥ ४५१

विराडादीशपर्यन्तं चैतन्यं चैकमेव तत् ।
यदनाद्यन्तमव्यक्तं चैतन्यमजमक्षरम् ॥ ४५२

महाप्रपञ्चेन महाविविक्तं सदयोग्निवत् ।
तत्सर्वं खल्विदं ब्रह्मेत्यस्य वाक्यस्य पण्डितैः ॥ ४५३

वाच्यार्थ इति निर्णीतं विविक्तं लक्ष्य इत्यपि ।
स्थूलाद्यज्ञानपर्यन्तं कार्यकारणलक्षणम् ।
दृश्यं सर्वमनात्मेति विजानीहि विचक्षण ॥ ४५४

## आत्मनिरूपणम्.

अन्तःकरणतद्वृत्तिद्रष्टृ नित्यमविक्रियम् ।
चैतन्यं यत्तदात्मेति बुद्ध्या बुध्यस्व सूक्ष्मया ॥ ४५५

एष प्रत्यक्स्वप्रकाशो निरंशोऽसङ्गः शुद्धस्सर्वदैकस्वभावः ।
नित्याखण्डानन्दरूपो निरीहः साक्षी चेता केवलो निर्गुणश्च ॥

नैव प्रत्यग्जायते वर्धते नो किंचिन्नापक्षीयते नैव नाशम् ।
आत्मा नित्यश्शाश्वतोऽयं पुराणो नासौ हन्यो हन्यमाने शरीरे ॥

जन्मास्तित्वविवृद्धयः परिणतिश्चापक्षतिर्नाशनं
दृश्यस्यैव भवन्ति षड्विकृतयो नानाविधा व्याधयः ।
स्थूलत्वादि च नीलताद्यपि मितिर्वर्णाश्रमादिप्रथाः
दृश्यन्ते वपुषो न चात्मन इमे तद्विक्रियासाक्षिणः ॥ ४५८

अस्मिन्नात्मन्यनात्मत्वं अनात्मन्यात्मतां पुनः ।
विपरीततयाऽध्यस्य संसरन्ति विमोहतः ॥ ४५९

भ्रान्त्या मनुष्योऽहमहं द्विजोऽहं तज्ज्ञोऽहमज्ञोऽहमतीव पापी ।
भ्रष्टोऽस्मि शिष्टोऽस्मि सुखी च दुःखीत्येवं विमुह्यात्मनि क-
ल्पयन्ति ॥ ४६०

अनात्मनो जन्मजरामृतिक्षुधातृष्णासुखक्लेशभयादिधर्मान् ।
विपर्ययेण ह्यतथाविधेऽस्मिन् आरोपयन्त्यात्मनि बुद्धिदोषात् ॥

भ्रान्त्या यत्र यदध्यासः तत्कृतेन गुणेन वा ।
दोषेणाप्यणुमात्रेण स न सम्बध्यते क्वचित् ॥ ४६२

किं मरुन्मृगतृष्णाम्बुपूरेणार्द्रत्वमृच्छति ।
दृष्टिसंस्थितपीतेन शङ्खः पीतायते किमु ।
बालकल्पितनैल्येन व्योम किं मलिनायते ॥ ४६३

शिष्यः—

प्रत्यगात्मन्यविषयेऽनात्माध्यासः कथं प्रभो ।
पुरो दृष्टे हि विषयेऽध्यस्यन्ति विषयान्तरम् ॥ ४६४
तद्दृष्टं शुक्तिरज्ज्वादौ सादृश्याद्यनुबन्धतः ।
परत्र पूर्वदृष्टस्याऽवभासः स्मृतिलक्षणः ॥ ४६५
अध्यासस्य कथं स्वामिन् भवेदात्मन्यगोचरे ।
नानुभूतः कदाऽप्यात्माऽननुभूतस्य वस्तुनः ॥ ४६६
सादृश्यं सिद्ध्यति कथं अनात्मनि विलक्षणे ।

अनात्मन्यात्मताध्यासः कथमेष समागतः ॥ ४६७
निवृत्तिः कथमेतस्य केनोपायेन सिद्ध्यति ।
उपाधियोग उभयोः सम एवेशजीवयोः ॥ ४६८
जीवस्यैव कथं बन्धः नेश्वरस्यास्ति तत्कथम् ।
एतत्सर्वं दयादृष्ट्या करामलकवत् स्फुटम् ।
प्रतिपादय सर्वज्ञ श्रीगुरो करुणानिधे ॥ ४६९

श्रीगुरुः—

न सावयव एकस्य नात्मा विषय इष्यते ।
अस्यास्मत्प्रत्ययार्थत्वात् अपरोक्षाच्च सर्वशः ॥ ४७०
प्रसिद्धिरात्मनोऽस्त्येव न कस्यापि च दृश्यते ।
प्रत्ययेनाहमस्मीति ह्यस्ति प्रत्यय आत्मनि ॥ ४७१
न कस्यापि स्वसद्भावे प्रमाणमभिकाङ्क्ष्यते ।
प्रमाणानां च प्रामाण्यं यन्मूलं किं तु बोधयेत् ॥ ४७२
मायाकार्यतिरोभूतो नैष आत्माऽनुभूयते ।
मेघवृन्दैर्यथा भानुः तथाऽयमहमादिभिः ॥ ४७३
पुरस्थ एव विषये वस्तुन्यध्यस्यतामिति ।
नियमो न कृतस्मद्भिः भ्रान्तिरेवात्र कारणम् ॥ ४७४
दृगाद्यविषये व्योम्नि नीलतादि यथाऽबुधाः ।
अध्यस्यन्ति तथैवास्मिन् आत्मन्यपि मतिभ्रमात् ॥ ४७५
अनात्मन्यात्मताध्यासे न सादृश्यमपेक्षते ।
पीतोऽयं शङ्ख इत्यादौ सादृश्यं किमपेक्षितम् ॥ ४७६
निरुपाधिभ्रमेष्वस्मिन नैवापेक्षा प्रदृश्यते ।
सोपाधिष्वेव तद्दृष्टं रज्जुसर्पभ्रमादिषु ॥ ४७७

तथाऽपि किंचिद्वक्ष्यामि सादृश्यं शृणु तत्परः ।
अत्यन्तनिर्मलस्सूक्ष्मः आत्माऽयमतिभास्वरः ॥ ४७८

बुद्धिस्तथैव सत्त्वात्मा साभासा भास्वराऽमला ।
सान्निध्यादात्मवद्भाति सूर्यवत् स्फटिको यथा ॥ ४७९

आत्माभासात्ततो बुद्धिः बुद्ध्याभासं ततो मनः ।
अक्षाणि मनआभासान्याक्षाभासमिदं वपुः ।
अत एवात्मताबुद्धिः देहाक्षादावनात्मनि ॥ ४८०

* ........................................................

धीश्शुद्धसत्त्वप्रधाना माया यत्र त्वस्य नास्त्यल्पभावः ।
सत्त्वस्यैवोत्कृष्टता तेन बन्धः नो विक्षेपस्तत्कृतो लेशमात्रः॥४८१

सर्वज्ञोऽप्रतिबद्धबोधविभवस्तेनैव देवस्स्वयं
मायां स्वामवलम्ब्य निश्चलतया स्वच्छन्दवृत्तिः प्रभुः ।
सृष्टिस्थित्यदनप्रवेशयमनव्यापारमात्रेच्छया
कुर्वन् क्रीडति तद्रजस्तम उभे संस्तभ्य शक्त्या स्वया ॥४८२

तस्मादावृतिविक्षेपौ किंचित्कर्तुं न शक्नुतः ।
स्वयमेव स्वतन्त्रोऽसौ तत्प्रवृत्तिनिरोधयोः ॥ ४८३

तमेव सा धीकर्मेति श्रुतिर्वक्ति महेशितुः ।
निग्रहानुग्रहे शक्तिःआवृतिक्षेपयोर्यतः ॥ ४८४

रजसस्तमसश्चैव प्राबल्यं सत्त्वहानतः ।
जीवोपाधौ ततो जीवे तत्कार्यं बलवत्तरम् ॥ ४८५

तेन बन्धोऽस्य जीवस्य संसारोऽपि च तत्कृतः ।
संप्राप्तस्सर्वदा यत्र दुःखं भयस्य ईक्षते ॥ ४८६

एतस्य संसृतेर्हेतुः अध्यासोऽर्थविपर्ययः ।
अध्यासमूलमज्ञानं आहुरावृतिलक्षणम् ॥ ४८७

*अत्र मातृकाकोशे २० श्लोकाः पतिताः इत्यवगम्यते.

## अज्ञाननिवर्तकम्.

अज्ञानस्य निवृत्तिस्तु ज्ञानेनैव न कर्मणा ।
अविरोधितया कर्म नैवाज्ञानस्य बाधकम् ॥ ४८८

कर्मणा जायते जन्तुः कर्मणैव प्रलीयते ।
कर्मणः कार्यमेवैषा जन्ममृत्युपरम्परा॥ ४८९

नैतस्मात्कर्मणः कार्यं अन्यदस्ति विलक्षणम् ।
अज्ञानकार्यं तत्कर्म यतोऽज्ञानेन वर्धते ॥ ४९०

यद्येन वर्धते तेन नाशस्तस्य न सिद्ध्यति ।
येन यस्य महावस्था निरोधाय न कल्पते ॥ ४९१

नाशत्वमेतदुभयोः को नुकल्पयितुं क्षमः ।
सर्वं कर्माविरोध्येव सदाऽज्ञानस्य सर्वदा ॥ ४९२

ततोऽज्ञानस्य विच्छित्तिः कर्मणा नैव सिद्ध्यति ।
यस्य प्रध्वस्तजनको यत्संयोगोऽस्ति तत्क्षणे ॥ ४९३

तयोरेव विरोधित्वं युक्तं भिन्नस्वभावयोः ।
तमःप्रकाशयोर्यद्वत परस्परविरोधिता ॥ ४९४

अज्ञानज्ञानयोस्तद्वत उभयोरेव दृश्यते ।
न ज्ञानेन विना नाशः तस्य केनापि सिद्ध्यति ॥ ४९५

तस्मादज्ञानविच्छित्त्यै ज्ञानं संपादयेत्सुधीः ।
आत्मानात्मविवेकेन ज्ञानं सिद्ध्यति नान्यथा ॥ ४९६

युक्त्याऽऽत्मानात्मनोस्तस्मात् करणीयं विवेचनम् ।
अनात्मन्यात्मताबुद्धिग्रन्थिर्येन विदीर्यते ॥ ४९७

आत्मानात्मविवेकार्थं विवादोऽयं निरूप्यते ।
येनात्मानात्मनोस्तत्त्वं विविक्तं प्रस्फुटायते ॥ ४९८

मूढा अश्रुतवेदान्ताः स्वयं पण्डितमानिनः ।
ईशप्रसादरहिताः सद्गुरोश्च बहिर्मुखाः ॥ ४९९

विवदन्ति प्रकारं तं शृणु वक्ष्यामि सादरम् ।

## पुत्रात्मवादः.

अत्यन्तपामरः कश्चित् पुत्र आत्मेति मन्यते ॥ ६००

आत्मनीव स्वपुत्रेऽपि प्रबलप्रीतिदर्शनात् ।
पुत्रे तु पुष्टे पुष्टोऽहं नष्टे नष्टोऽहमित्यतः ॥ ६०१
अनुभूतिबलाच्चापि युक्तितो विश्रुतेरपि ।
आत्मा वै पुत्रनामासीत्येवं च वदति श्रुतिः ॥ ६०२
दीपाद्दीपो यथा तद्वत् पितुः पुत्रः प्रजायते ।
पितुर्गुणानां तनये बीजाङ्कुरवदीक्षणात् ॥ ६०३
अतोऽयं पुत्र आत्मेति मन्यते भ्रान्तिमत्तमः ।

## देहात्मवादः.

तन्मतं दूषयत्यन्यः पुत्र आत्मा कथं त्विति ॥ ६०४

प्रीतिमात्रात्कथं पुत्रः आत्मा भवितुमर्हति ।
अन्यत्रापीक्ष्यते प्रीतिः क्षेत्रपात्रधनादिषु ॥ ६०५
पुत्राद्विशिष्टा देहेऽस्मिन् प्राणिनां प्रीतिरिष्यते ।
प्रदीप्तभवने पुत्रं त्यक्त्वा जन्तुः पलायते ॥ ६०६
तं विक्रीणाति देहार्थं प्रतिकूलं निहन्ति च ।
तस्मादात्मा तु तनयो न भवेच्च कदाचन ॥ ६०७
गुणरूपादिसादृश्यं दीपवन्न सुते पितुः ।
अव्यङ्गाज्जायते व्यङ्गः सुगुणादपि दुर्गुणः ॥ ६०८

आभासमात्रास्तास्सर्वा युक्तयोऽप्युक्तयोऽपि च ।
पुत्रस्य पितृवद्देहे सर्वकार्येषु वस्तुषु ॥ ५०९

स्वामित्वद्योतनायास्मिन् आत्मत्वमुपचर्यते ।
श्रुत्या न मुख्यया वृत्त्या पुत्र आत्मेति नोच्यते ॥ ५१०

औपचारिकमात्मत्वं पुत्रे तस्मान्न मुख्यतः ।
अहंपदप्रत्ययार्थो देह एव न चेतरः ॥ ५११

प्रत्यक्षस्सर्वजन्तूनां देहोऽहमिति निश्चयः ।
एष पुरुषोऽन्नरसमय इत्यपि च श्रुतिः ॥ ५१२

पुरुषत्वं वदत्यस्य स्वात्मा हि पुरुषस्ततः ।
आत्माऽयं देह एवेति चार्वाकेण विनिश्चितम् ॥ ५१३

## इन्द्रियात्मवादः.

तन्मतं दूषयत्यन्योऽसहमानः पृथग्जनः ।
देह आत्मा कथं नु स्यात् परतन्त्रो ह्यचेतनः ॥ ५१४

इन्द्रियैश्चाल्यमानोऽयं चेष्टते न स्वतः क्वचित् ।
आश्रयश्चक्षुरादीनां गृहवद्गृहमेधिनाम् ॥ ५१५

बाल्यादिनानावस्थावान् शुक्रशोणितसंभवः ।
अतः कदाऽपि देहस्य नात्मत्वमुपपद्यते ॥ ५१६

बधिरोऽहं च काणोऽहं मूक इत्यनुभूतितः ।
इन्द्रियाणि भवन्त्यात्मा येषामस्त्यर्थवेदनम् ॥ ५१७

इन्द्रियाणां चेतनत्वं [illegible]प्राणाः प्रजापतिम् ।
एत्येत्यूचुरिति श्रुत्यैव संप्रतिपाद्यते ॥ ५१८

यतस्तस्मादिन्द्रियाणां युक्तमात्मत्वमित्यमुम् ।
निश्चयं दूषयत्यन्योऽसहमानः पृथग्जनः ॥ ५१९

## प्राणात्मवादः.

इन्द्रियाणि कथं त्वात्मा करणानि कुठारवत् ।
करणस्य कुठारादेः चेतनत्वं न दृश्यते ॥ ६२०

श्रुत्याऽधिदेवतावादः इन्द्रियेषूपचर्यते ।
न तु साक्षादिन्द्रियाणां चेतनत्वमुदीर्यते ॥ ६२१

अचेतनस्य दीपादेः अर्थभासकता यथा ।
तथैव चक्षुरादीनां जडानामपि सिद्ध्यति ॥ ६२२

इन्द्रियाणां चेष्टयिता प्राणोऽयं पञ्चवृत्तिकः ।
सर्वावस्थास्ववस्थावान् सोऽयमात्मत्वमर्हति ।
अहं क्षुधावान् तृष्णावान् इत्याद्यनुभवादपि ॥ ६२३

श्रुत्याऽन्योन्तर आत्मा प्राणमय इतीर्यते यस्मात् ।
तस्मात्प्राणस्यात्मत्वं युक्तं न करणाख्यानाम् ॥ ६२४

## मनआत्मवादः.

इति निश्चयमेतस्य दूषयत्यपरो जडः ।
भवत्यात्मा कथं प्राणो वायुरेवैष आत्मनः ॥ ६२५

बहिर्यात्यन्तरायाति भस्त्रिकावायुवन्मुहुः ।
न हितं वाऽहितं सर्वं अन्यद्वा वेद किंचन ॥ ६२६

जडस्वभावश्चपलः कर्मयुक्तश्च सर्वदा ।
प्राणस्य भानं मनसि स्थिते सुप्ते न दृश्यते ॥ ६२७

मनस्तु सर्वं जानाति सर्ववेदनकारणम् ।
यत्तस्मान्मन एवात्मा प्राणस्तु न कदाचन ॥ ६२८

सङ्कल्पवानहं चिन्तावानहं च विकल्पवान् ।
इत्याद्यनुभवादन्योऽन्तर आत्मा मनोमयः ॥ ६२९.

इत्यादिश्रुतिसद्भावात् युक्ता मनस आत्मता ।
इति निश्चयमेतस्य दूषयत्यपरो जडः ॥ ५३०

## बुद्ध्यात्मवादः.

कथं मनस आत्मत्वं करणस्य दृगादिवत् ।
कर्तृप्रयोज्यं करणं न स्वयं तु प्रवर्तते ॥ ५३१

करणप्रयोक्ता यः कर्ता स एवात्मत्वमर्हति ।
आत्मा स्वतन्त्रः पुरुषो न प्रयोज्यः कदाचन ॥ ५३२

अहं कर्ताऽस्म्यहं भोक्ता सुखीत्यनुभवादपि ।
बुद्धिरात्मा भवत्येव बुद्धिधर्मो ह्यहंकृतिः ॥ ५३३

अन्योऽन्तर आत्मा विज्ञानमय इति वदति निगमः ।
मनसोऽपि च भिन्नं विज्ञानमयं कर्तृरूपमात्मानम् ॥ ५३४

विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च ।
इत्यस्य कर्तृता श्रुत्या मुखतः प्रतिपाद्यते ।
तस्माद्युक्ताऽऽत्मता बुद्धेः इति बौद्धेन निश्चितम् ॥ ५३५

## अज्ञानात्मवादः.

प्राभाकरस्तार्किकश्च तावुभावप्यमर्षया ।
तन्निश्चयं दूषयतो बुद्धिरात्मा कथं न्विति ॥ ५३६

बुद्धेरज्ञानकार्यत्वात् विनाशित्वात्प्रतिक्षणम् ।
बुद्ध्यादीनां च सर्वेषां अज्ञाने लयदर्शनात् ॥ ५३७

अज्ञोऽहमित्यनुभवात् आस्त्रीबालादिगोचरात् ।
भवत्यज्ञानमेवात्मा न तु बुद्धिः कदाचन ॥ ५३८

विज्ञानमयादन्यं त्वानन्दमयं परस्तथात्मानम् ।
अन्योऽन्तर आत्माऽऽनन्दमय इति वदति वेदोऽपि ॥ ५३९

दुःखप्रत्ययशून्यत्वात् आनन्दमयता मता ।
अज्ञाने सकलं सुप्तौ बुद्ध्यादि प्रविलीयते ॥ ५४०

दुःखिनोपि सुषुप्तौ तु आनन्दमयता ततः ।
सुप्तौ किंचिन्न जानामीत्यनुभूतिश्च दृश्यते ॥ ५४१

यत एवमतो युक्ता ह्यज्ञानस्यात्मता ध्रुवम् ।
इति तन्निश्चयं भाट्टा दूषयन्ति स्वयुक्तिभिः ॥ ५४२

## ज्ञानाज्ञनात्मवादः.

कथमज्ञानमेवात्मा ज्ञानं चाप्युपलभ्यते ॥ ५४३

ज्ञानाभावे कथं विद्युः अज्ञोहमिति चाज्ञताम् ।
अस्वाप्सं सुखमेवाहं न जानाम्यत्र किंचन ॥ ५४४

इत्यज्ञानमपि ज्ञानं प्रबुद्धेषु प्रदृश्यते ।
प्रज्ञानघन एवानन्दमय इत्यपि श्रुतिः ॥ ५४५

प्रब्रवीत्युभयात्मत्वं आत्मनस्स्वयमेव सा ।
आत्माऽतश्चिज्जडतनुः खद्योत इव संमतः ॥ ५४६

न केवलाज्ञानमयः घटकुड्यादिवज्जडः ।
इति निश्चयमेतेषां दूषयन्त्यपरो जडः ॥ ५४७

## शून्यात्मवादः.

ज्ञानाज्ञानमयस्त्वात्मा कथं भवितुमर्हति ।
परस्परविरुद्धत्वात् तेजस्तिमिरवत्तयोः ॥ ५४८

सामानाधिकरण्यं वा संयोगो वा समाश्रयः ।
तमःप्रकाशवज्ज्ञानाज्ञानयोर्न हि सिद्ध्यति ॥ ५४९

अज्ञानमपि विज्ञानं बुद्धिर्वाऽपि च तद्गुणाः ।
सुषुप्तौ नोपलभ्यन्ते यत्किंचिदपि वाऽपरम् ॥ ५५०

मात्रादिलक्षणं किं नु शून्यमेवोपलभ्यते ।
सुषुप्तौ नान्यदस्त्येव नाहमप्यासमित्यनु ॥ ५५१

सुप्तोत्थितजनैस्सर्वैः शून्यमेवानुस्मर्यते ।
यत्ततश्शून्यमेवात्मा नज्ञानाज्ञानलक्षणः ॥ ५५२

वेदेनाप्यसदेवेदं अग्र आसीदिति स्फुटम् ।
निरुच्यते यतस्तस्मात् शून्यस्यैवात्मता मता ॥ ५५३

असन्नेव घटः पूर्वं जायमानः प्रदृश्यते ।
न हि कुम्भः पुरैवान्तः स्थित्वोदेति बहिर्मुखः ॥ ५५४

यत्तस्मादसतस्सर्वं सदिदं समजायत ।
ततस्सर्वात्मना शून्यं एवात्मत्वं समर्हति ॥ ५५५

इत्येवं पण्डितंमन्यैः परस्परविरोधिभिः ।
तत्तन्मतानुरूपाल्पश्रुतियुक्त्यनुभूतिभिः ॥ ५५६

निर्णीतमतजातानि खण्डितान्येव पण्डितैः ।
श्रुतिभिश्चाप्यनुभवैः बाधकैः प्रतिवादिनाम् ॥ ५५७

यतस्तस्मात्तु पुत्रादेः शून्यान्तस्य विशेषतः ।
सुसाधितमनात्मत्वं श्रुतियुक्त्यनुभूतिभिः ॥ ५५८

न हि प्रमाणान्तरबाधितस्य याथार्थ्यमङ्गीक्रियते महद्भिः ।
पुत्रादिशून्यान्तमनात्मतत्त्वं इत्येव विस्पष्टमतस्सुजातम् ॥ ५५९

शिष्यः—

सुषुप्तिकाले सकले विलीने शून्यं विना नान्यदिहोपलभ्यते ।
शून्यं त्वनात्मा न ततः परः कोऽप्यात्माभिधानस्त्वनुभूयतेऽर्थः॥५६०

यद्यस्ति चात्मा किमु नोपलभ्यते सुप्तौ यथा तिष्ठति किं प्रमाणम् ।
किंलक्षणोऽसौ स कथं न बाध्यते प्रबाध्यमानेष्वहमादिषु स्वयम्॥

एतत्संशयजातं मे हृदयग्रन्थिलक्षणम् ।
छिन्धि युक्तिमहाखड्गधारया कृपया गुरो ॥ ५६२

गुरुः—

अतिसूक्ष्मतरः प्रश्नः तवायं सदृशो मतः ।
सूक्ष्मार्थदर्शनं सूक्ष्मबुद्धिष्वेव प्रदृश्यते ॥ ५६३

शृणु वक्ष्यामि सकलं यद्यत्पृष्टं त्वयाऽधुना ।
रहस्यं परमं सूक्ष्मं ज्ञातव्यं च मुमुक्षुभिः ॥ ५६४

## शून्यवादनिरासः.

बुद्ध्यादि सकलं सुप्तौ अनुलीय स्वकारणे ।
अव्यक्ते वटवद्बीजे तिष्ठत्यविकृतात्मना ॥ ५६५

तिष्ठत्येव स्वरूपेण न तु शून्यायते जगत् ।
क्वचिदङ्कुररूपेण क्वचिद्बीजात्मना वटः ॥ ५६६

कार्यकारणरूपेण यथा तिष्ठत्सदस्तथा ।
अव्याकृतात्मनाऽवस्थां जगतो वदति श्रुतिः ॥ ५६७

सुषुप्त्यादिषु तद्वेदं तदव्याकृतमित्यमो ।
इममर्थमविज्ञाय निर्णीतं श्रुतियुक्तिभिः ॥ ५६८

जगतो दर्शनं शून्यं इति प्राहुरतद्विदः ।
नासतस्सत उत्पत्तिः श्रूयते न च दृश्यते ।
उदेति नरशृङ्गात्किं खपुष्पात्किं भविष्यति ॥ ५६९

प्रभवति न हि कुम्भोऽविद्यमानो मृदश्चेत्
प्रभवतु सिकताया वाऽथ वा वारिणो वा ।
न हि भवति च ताभ्यां सर्वथा क्वापि तस्मात्
यत उदयति योऽर्थोऽस्त्यत्र तस्य स्वभावः ॥ ५७०

अन्यथा विपरीतं स्यात् कार्यकारणलक्षम् ।
नियतं सर्वशास्त्रेषु सर्वलोकेषु सर्वतः ॥ ५७१

कथमसतस्सज्जायेतेति श्रुत्या निषिध्यते तस्मात् ।
असतस्सज्जननं नो घटते मिथ्यैव शून्यशब्दार्थः ॥ ५७२

अव्यक्तशब्दिते प्राज्ञे सत्यात्मन्यत्र जाग्रति ।
कथं सिध्यति शून्यत्वं तस्य भ्रान्तशिरोमणे ॥ ५७३

सुषुप्तौ शून्यमेवेति केन पुंसा तवेरितम् ।
हेतुनाऽनुमितं केन कथं ज्ञातं त्वयोच्यताम् ॥ ५७४

इति पृष्टे मूढतमो वदिष्यति किमुत्तरम् ।
नैवानुरूपकं लिङ्गं वक्ता वा नास्ति कश्चन ।
सुषुप्तिस्थितशून्यस्य बोद्धा कोऽन्वात्मनः परः ॥ ५७५

स्वेनानुभूतं स्वयमेव वक्ति स्वसुप्तिकाले स्थितशून्यभावम् ।
तत्र स्वसत्तामनवेक्ष्य मूढः स्वस्यापि शून्यत्वमयं ब्रवीति॥ ५७६

अवेद्यमानस्स्वयमन्यलोकैः सौषुप्तिकं धर्ममवैति साक्षात् ।
बुद्ध्याद्यभावस्य च योऽत्र बोद्धा स एष आत्मा खलु निर्विकारः॥

## आत्मस्वरूपम्.

यस्येदं सकलं विभाति महसा सत्यस्वयंज्योतिषः
सूर्यस्येव किमस्ति भासकमिह प्रज्ञादि सर्वं जडम् ।
न ह्यर्कस्य विभासकं क्षितितले दृष्टं तथैवात्मनो
नान्यः कोऽप्यनुभासकोऽनुभविता नातः परः कश्चन॥५७८

येनानुभूयते सर्वं जाग्रत्स्वप्नसुषुप्तिषु ।
विज्ञातारमिमं को नु कथं वेदितुमर्हति ॥ ५७९

सर्वस्य दाहको वह्निः वह्नेर्नान्योस्ति दाहकः ।
यथातथाऽऽत्मनो ज्ञातुः ज्ञाता कोऽप्यनुदृश्यते ॥ ५८०

उपलभ्येत केनायं ह्युपलब्धा स्वयं ततः ।
उपलब्ध्यन्तराभावात् नायमात्मोपलभ्यते ॥ ९८१

बुद्ध्यादिवेद्यविलयादयमेक एव
सुप्तौ न पश्यति शृणोति न वेत्ति किंचित् ।
सौषुप्तिकस्य तमसः स्वयमेव साक्षी
भूत्वा प्रतिष्ठति सुखेन च निर्विकल्पः ॥ ९८२

सुषुप्तावात्मसद्भावे प्रमाणं पण्डितोत्तमाः ।
विदुस्स्वप्रत्यभिज्ञानं आबालवृद्धसंमतम् ॥ ९८३

प्रत्यभिज्ञायमानत्वात् लिङ्गमात्रानुमापकम् ।
स्मर्यमाणस्य सद्भावः सुखमस्वाप्समित्ययम ॥ ९८४

पुराऽनुभूतो नो चेत्तु स्मृतेरनुदयो भवेत ।
इत्यादितर्कयुक्तिश्च सद्भावे मानमात्मनः ॥ ९८५

यत्रात्मनोऽकामयितृत्वबुद्धिः स्वप्नानपेक्षाऽपि च तत्सुषुप्तम् ।
इत्यात्मसद्भाव उदीर्यतेऽत्र श्रुत्याऽपि तस्माच्छ्रुतिरत्र मानम् ॥

अकामयितृता स्वप्नादर्शनं घटते कथम् ।
अविद्यमानस्य ततः आत्मास्तित्वं प्रतीयते ॥ ९८७

एतैः प्रमाणैरस्तीति ज्ञातस्साक्षितया बुधैः ।
आत्माऽयं केवलश्शुद्धः सच्चिदानन्दलक्षणः ॥ ९८८

सत्त्वचित्त्वानन्दतादिलक्षणं प्रत्यगात्मनः ।
कालत्रयेऽप्यबाध्यत्वं सत्यं नित्यस्वरूपतः ॥ ९८९

शुद्धचैतन्यरूपत्वं चित्त्वं ज्ञानस्वरूपतः ।
अखण्डसुखरूपत्वं आनन्दत्वमितीर्यते ॥ ९९०

अनुस्यूताऽऽत्मनस्सत्ता जाग्रत्स्वप्नसुषुप्तिषु ।
अहमस्मीत्यतो नित्यो भवत्यात्माऽयमव्ययः ॥ ९९१

सर्वदाऽप्यासमित्येवाभिन्नप्रत्यय ईक्ष्यते ।
कदाऽपि नासमित्यस्मात् आत्मनो नित्यता मता ॥ ५९२

आयातासु गतासु शैशवमुखावस्थासु जाग्रन्मुखा-
स्वन्यास्वप्यखिलासु वृत्तिषु धियो दुष्टास्वदुष्टास्वपि ।
गङ्गाभङ्गपरम्परासु जलवत्सत्तानुवृत्तात्मनः
तिष्ठत्येव सदा स्थिराहमहमित्येकात्मता साक्षिणः ॥ ५९३

प्रतिपदमहमादयो विभिन्नाः क्षणपरिणामितया विकारिणस्ते ।
न परिणतिरमुष्य निष्कळत्वात् अयमविकारितयैव नित्य आत्मा॥

यस्स्वप्नमद्राक्षमहं सुखं योऽस्वाप्सं स एवास्म्यथ जागरूकः ।
इत्येवमच्छिन्नतयाऽनुभूयते सत्ताऽऽत्मनो नास्ति हि संशयोऽत्र ॥

श्रुत्युक्ताप्षोडशकलाः चिदाभासस्य नात्मनः ।
निष्कलत्वान्नास्य लयः तस्मान्नित्यत्वमात्मनः ॥ ५९६

जडप्रकाशकस्सूर्यः प्रकाशात्मैव नो जडः ।
बुद्ध्यादिभासकस्तस्मात् चित्स्वरूपस्तथा मतः ॥ ५९७

कुड्यादेस्तु जडस्य नैव घटते भानं स्वतस्सर्वदा
सूर्यादिप्रभया विना क्वचिदपि प्रत्यक्षमेतत्तथा ।
बुद्ध्यादेरपि न स्वतोऽस्त्यणुरपि स्फूर्तिर्विनैवात्मना
सोऽयं केवलचिन्मयश्रुतिमतो भानुर्यथा रुड्मयः ॥ ५९८

स्वभासने वाऽन्यपदार्थभासने नार्कः प्रकाशान्तरमीपदिच्छति ।
स्वबोधने वाऽप्यहमादिबोधने तथैव चिद्धातुरयं परात्मा ॥ ५९९

अन्यप्रकाशं न किमप्यपेक्ष्य यतोऽयमाभाति निजात्मनैव ।
ततः स्वयंज्योतिरयं चिदात्मा न ह्यात्मभाने परदीप्त्यपेक्षणा॥६००

यं न प्रकाशयति किंचिदिनोऽपि चन्द्रः
नो विद्युतः किमुत वह्निरयं मिताभः ।

यं भान्तमेतमनुभाति जगत्समस्तं
सोऽयं स्वयं स्फुरति सर्वदशासु चात्मा ॥ ६०१

## आत्मन आनन्दत्वनिरूपणम्.

आत्मनस्सुखरूपत्वात् आनन्दत्वं स्वलक्षणम् ।
परप्रेमास्पदत्वेन सुखरूपत्वमात्मनः ॥ ६०२

सुखहेतुषु सर्वेषां प्रीतिस्सावधिरीक्ष्यते ।
कदाऽपि नावधिः प्रीतेः स्वात्मनि प्राणिनां क्वचित् ॥ ६०३

क्षीणेन्द्रियस्य जीर्णस्य संप्राप्तोत्क्रमणस्य वा ।
अस्ति जीवितुमेवाशा स्वात्मा प्रियतमो यतः ॥ ६०४

आत्माऽतः परमप्रेमास्पदस्सर्वशरीरिणाम् ।
यस्य शेषतया सर्वं उपादेयत्वमृच्छति ॥ ६०५

एष एव प्रियतमः पुत्रादपि धनादपि ।
अन्यस्मादपि सर्वस्मात् आत्माऽयं परमान्तरः ॥ ६०६

प्रियत्वेन मतं यत्तु तत्सदा नाप्रियं नृणाम् ।
विपत्तावपि संपत्तौ यथाऽऽत्मा न तथा परः ॥ ६०७

आत्मा खलु प्रियतमोऽसुभृतां यदर्थाः
भार्यात्मजाप्तगृहवित्तमुखाः पदार्थाः ।
वाणिज्यकर्षणगवावनराजसेवा-
भैषज्यकप्रभृतयो विविधाः क्रियाश्च ॥ ६०८

प्रवृत्तिश्च निवृत्तिश्च यच्च यावच्च चेष्टितम् ।
आत्मार्थमेव नान्यार्थं नातः प्रियतमः परः ॥ ६०९

तस्मादात्मा केवलानन्दरूपः यस्सर्वस्माद्वस्तुनः प्रेष्ठ उक्तः ।
यो वा अस्मान्मन्यतेऽन्यं प्रियं यं सोऽयं तस्माच्छोकमेवानुभुङ्क्ते ॥

शिष्यः—

अपरः क्रियते प्रश्नः मयाऽयं क्षम्यतां प्रभो ।
अज्ञवागपराधाय कल्पते न महात्मनः ॥ ६११

आत्माऽन्यस्सुखमन्यच्च नात्मनस्सुखरूपता ।
आत्मनस्सुखमाशास्यं यतते सकलो जनः ॥ ६१२

आत्मनस्सुखरूपत्वे प्रयत्नः किमु देहिनाम् ।
एष मे संशयस्स्वामिन् कृपयैव निरस्यताम् ॥ ६१३

श्रीगुरुः—

## आत्मान्यस्य सुखरूपत्वनिरासः.

आनन्दरूपमात्मानं अज्ञात्वैव पृथग्जनः ।
बहिस्सुखाय यतते न तु कश्चिद्विद्वत् बुधः ॥ ६१४

अज्ञात्वैव हि निक्षेपं भिक्षामटति दुर्मतिः ।
स्ववेश्मनि निधिं ज्ञात्वा को नु भिक्षामटेत्सुधीः ॥ ६१५

स्थूलं च सूक्ष्मं च वपुस्स्वभावतः
दुःखात्मकं स्वात्मतया गृहीत्वा ।
विस्मृत्य च स्वं सुखरूपमात्मनः
दुःखप्रदेभ्यस्सुखमज्ञ इच्छति ॥ ६१६

न हि दुःखप्रदं वस्तु सुखं दातुं समर्हति ।
किं विषं पिबतो जन्तोः अमृतत्वं प्रयच्छति ॥ ६१७

आत्माऽन्यस्सुखमन्यच्चेत्येवं निश्चित्य पामरः ।
बहिस्सुखाय यतते सत्यमेव न संशयः ॥ ६१८

इष्टस्य वस्तुनो ध्यानदर्शनाद्युपभुक्तिषु ।
प्रतीयते य आनन्दः सर्वेषामिह देहिनाम् ॥ ६१९

स वस्तुधर्मो नो यस्मात् मनस्येवोपलभ्यते ।
वस्तुधर्मस्य मनसि कथं स्यादुपलम्भनम् ॥ ६२०

अन्यत्र त्वन्यधर्माणामुपलम्भो न दृश्यते ।
तस्मान्न वस्तुधर्मोऽयं आनन्दस्तु कदाचन ॥ ६२१

नाप्येष धर्मो मनसोऽसत्यर्थे तददर्शनात् ।
असति व्यञ्जके व्यङ्ग्यं नोदेतीति च मन्यताम् ॥ ६२२

सत्यर्थेऽपि च नोदेति ह्यानन्दस्तूक्तलक्षणः ।
सत्यपि व्यञ्जके व्यङ्ग्यानुदयो नैव सम्मतः ॥ ६२३

दुरदृष्टादिकं नात्र प्रतिबन्धः प्रकल्प्यताम् ।
प्रियस्य वस्तुनो लाभे दुरदृष्टं न सिध्यति ॥ ६२४

तस्मान्न मानसो धर्मः निर्गुणत्वान्न चात्मनः ।
किंतु पुण्यस्य सान्निध्यात इष्टस्यापि च वस्तुनः ॥ ६२५

सत्त्वप्रधाने चित्तेऽस्मिन् आत्मैव प्रतिबिम्बति ।
आनन्दलक्षणस्स्वच्छपयसीव सुधाकरः ॥ ६२६

सोऽयमाभास आनन्दः चित्ते यः प्रतिबिम्बितः ।
पुण्योत्कर्षापकर्षाभ्यां भवत्युच्चावचस्स्वयम् ॥ ६२७

सार्वभौमादि ब्रह्मान्तं श्रुत्या यः प्रतिपादितः ।
स क्षयिष्णुस्सातिशयः प्रक्षीणे कारणे लयम् ॥ ६२८

यात्येष विषयानन्दः यस्तु पुण्यैकसाधनः ।
ये तु वैषयिकानन्दं भुञ्जते पुण्यकारिणः ॥ ६२९

दुःखं च भोगकालेऽपि तेषामन्ते महत्तरम् ।
सुखं विषयसंपृक्तं विषसंपृक्तभक्तवत् ॥ ६३०

भोगकालेऽपि भोगान्ते दुःखमेव प्रयच्छति ।
सुखमुच्चावचत्वेन क्षयिष्णुत्वभयेन च ॥ ६३१

भोगकाले भवेन्नृणां ब्रह्मादिपदभाजिनाम् ।
राजास्थानप्रविष्टानां तारतम्यं मतं यथा ॥ ६३२

तथैव दुःखं जन्तूनां ब्रह्मादिपदभाजिनाम् ।
न काङ्क्षणीयं विदुषा तस्माद्वैषयिकं सुखम् ॥ ६३३

यो बिम्बभूत आनन्दः स आत्मानन्दलक्षणः ।
शाश्वतो निर्भयः पूर्णः नित्य एकोपि निर्भयः ॥ ६३४

लक्ष्यते प्रतिबिम्बेनाभासानन्देन बिम्बवत् ।
प्रतिबिम्बो बिम्बमूलः विना बिम्बं न सिध्यति ॥ ६३५

यत्ततो बिम्ब आनन्दः प्रतिबिम्बेन लक्ष्यते ।
युक्त्यैव पन्डितजनैः न कदाऽप्यनुभूयते ॥ ६३६

अविद्याकार्यकरणसङ्घातेषु पुरोदितः ।
आत्मा जाग्रत्यपि स्वप्ने न भवत्येष गोचरः ॥ ६३७

स्थूलस्यापि च सूक्ष्मस्य दुःखरूपस्य वर्ष्मणः ।
लये सुषुप्तौ स्फुरति प्रत्यगानन्दलक्षणः ॥ ६३८

न ह्यत्र विषयः कश्चित् नापि बुद्ध्यादि किंचन ।
आत्मैव केवलानन्दमात्रस्तिष्ठति न द्वयः ॥ ६३९

प्रत्यभिज्ञायते सर्वैः एष सुप्तोत्थितैर्जनैः ।
सुखमात्रतया नात्र संशयं कर्तुमर्हसि ॥ ६४०

त्वयाऽपि प्रत्यभिज्ञातं सुखमात्रत्वमात्मनः ।
सुषुप्तादुत्थितवता सुखमस्वाप्समित्यनु ॥ ६४१

दुःखाभावस्सुखमिति यदुक्तं पूर्ववादिना ।
अनाघ्रातोपनिषदा तदसारं मृषा वचः ॥ ६४२

दुःखाभावस्तु लोष्टादौ विद्यते नानुभूयते ।
सुखलेशोपि सर्वेषां प्रत्यक्षं तदिदं खलु ॥ ६४३

सदयं ह्येत एवेति प्रस्तुत्य वदति श्रुतिः ।
सद्घनोऽयं चिद्घनोऽयं आनन्दघन इत्यपि ॥ ६४४

आनन्दघनतामस्य स्वरूपं प्रत्यगात्मनः ।
धन्यैर्महात्मभिर्धीरैः ब्रह्मविद्भिस्सदुत्तमैः ॥ ६४५

अपरोक्षतयैवात्मा समाधावनुभूयते ।
केवलानन्दमात्रत्वेनैवमत्र न संशयः ॥ ६४६

स्वस्वोपाध्यनुरूपेण ब्रह्माद्यास्सर्वजन्तवः ।
उपजीवन्त्यमुष्यैव मात्रामानन्दलक्षणाम् ॥ ६४७

आस्वाद्यते यो भक्ष्येषु सुखकृन्मधुरो रसः ।
स गुडस्यैव नो तेषां माधुर्यं विद्यते क्वचित ॥ ६४८

तद्वद्विषयसान्निध्यात् आनन्दो यः प्रतीयते ।
बिम्बानन्दांशविस्फूर्तिः एवासौ न जडात्मनाम् ॥ ६४९

यस्य कस्यापि योगेन यत्र कुत्रापि दृश्यते ।
आनन्दस्स परस्यैव ब्रह्मणस्स्फूर्तिलक्षणः ॥ ६५०

यथा कुवलयोल्लासः चन्द्रस्यैव प्रभावतः ।
तथाऽऽनन्दोदयोऽप्येषां स्फुरणादेव वस्तुनः ॥ ६५१

## आत्मनः अद्वितीयत्वम्.

सत्त्वं चित्त्वं तथाऽऽनन्दः स्वरूपं परमात्मनः ।
निर्गुणस्य गुणायोगात् गुणास्तु न भवन्ति ते ॥ ६५२

विशेषणं तु व्यावृत्त्यै भिन्ने द्रव्यान्तरे सति ।
परमात्माऽद्वितीयोऽयं प्रपञ्चस्य मृषात्वतः ॥ ६५३

वस्त्वन्तरस्याभावेन न व्यावृत्त्यः कदाचन ।
केवलो निर्गुणश्चेति निर्गुणत्वं निरूच्यते ॥ ६५४

श्रुत्यैव न ततस्तेषां गुणत्वमुपपद्यते ।
उष्णत्वं च प्रकाशश्च यथा वह्नेस्तथाऽऽत्मनः ॥ ६५५

सत्त्वचित्त्वानन्दतादि स्वरूपमिति निश्चितम् ।
अत एव सजातीयविजातीयादिलक्षणः ॥ ६५६

भेदो न विद्यते वस्तुन्यद्वितीये परात्मनि ।
प्रपञ्चस्यापवादेन विजातीयकृता भिदा ॥ ६५७

नेष्यते तत्प्रकारं ते वक्ष्यामि शृणु सादरम् ।
अहेर्गुणविवर्तस्य गुणमात्रस्य वस्तुनः ॥ ६५८

विवर्तस्यास्य जगतः सन्मात्रत्वेन दर्शनम् ।
अपवाद इति प्राहुः अद्वैतब्रह्मदर्शिनः ॥ ६५९

व्युत्क्रमेण तदुत्पत्तेः द्रष्टव्यं सूक्ष्मबुद्धिभिः ।
प्रतीतस्यास्य जगतः सन्मात्रत्वं सुयुक्तिभिः ॥ ६६०

चतुर्विधं स्थूलशरीरजातं तद्भोज्यमन्नादि तदाश्रयादि ।
ब्रह्माण्डमेतत्सकलं स्थविष्ठं ईक्षेत पञ्चीकृतभूतमात्रम् ॥ ६६१

यत्कार्यरूपेण यदीक्ष्यते तत् तन्मात्रमेवात्र विचार्यमाणे ।
मृत्कार्यभूतं कलशादि सम्यक् विचारितं सन्न मृदो विभिद्यते॥६६२

अन्तर्बहिश्चापि मृदेव दृश्यते मृदो न भिन्नं कलशादि किंचन ।
ग्रीवादिमद्यत्कलशं तदित्थं न वाच्यमेतच्च मृदेव नान्यत् ॥ ६६३

स्वरूपतस्तत्कलशादिनाम्ना मृदेव मूढैरभिधीयते ततः ।
नाम्नोहि भेदो न तु वस्तुभेदः प्रदृश्यते तत्र विचार्यमाणे॥ ६६४

तस्माद्धि कार्यं न कदाऽपि भिन्नं स्वकारणादस्ति यतस्ततोऽङ्ग ।
यद्भौतिकं सर्वमिदं तथैव तद्भूतमात्रं न ततोऽपि भिन्नम् ॥ ६६५

तच्चापि पञ्चीकृतभूतजातं शब्दादिभिः स्वस्वगुणैश्च सार्धम् ।
वपूंषि सूक्ष्माणि च सर्वमेतत भवन्त्यपञ्चीकृतभूतमात्रम् ॥ ६६६

तदप्यपञ्चीकृतभूतजातं रजस्तमस्सत्त्वगुणैश्च सार्धम् ।
अव्यक्तमात्रं भवति स्वरूपतः साभासमव्यक्तमिदं स्वयं च॥६६७

आधारभूतं यदखण्डमाद्यं शुद्धं परं ब्रह्म सदैकरूपम् ।
सन्मात्रमेवास्त्यथ नो विकल्पः सतः परं केवलमेव वस्तु ॥ ६६८

एकश्चन्द्रस्सद्वितीयो यथा स्यात् दृष्टे दोषादेव पुंसस्तथैकम् ।
ब्रह्मास्त्येतद्बुद्धिदोषेण नाना दोषे नष्टे भाति वस्त्वेकमेव ॥ ६६९

रज्जोः स्वरूपाधिगमे न सर्पधीः रज्ज्वां विलीना तु यथा तथैव ।
ब्रह्मावगत्या तु जगत्प्रतीतिः तत्रैव लीना तु सह भ्रमेण ॥ ६७०

भ्रान्त्योदितद्वैतमतिप्रशान्त्या सदैकमेवास्ति सदाऽद्वितीयम् ।
ततो विजातीयकृतोऽत्र भेदो न विद्यते ब्रह्मणि निर्विकल्पे॥ ६७१

यदाऽस्त्युपाधिस्तदभिन्न आत्मा तदा सजातीय इवावभाति ।
स्वप्नार्थतस्तस्य मृषात्मकत्वात् तदप्रतीतौ स्वयमेव चात्मा ।
ब्रह्मैक्यतामेति पृथङ्न भाति ततस्सजातीयकृतो न भेदः ॥ ६७२

घटाभावे घटाकाशो महाकाशो यथा तथा ।
उपाध्यभावे त्वात्मैष स्वयं ब्रह्मैव केवलम् ॥ ६७३

पूर्ण एव सदाकाशो घटे सत्यप्यसत्यपि ।
नित्यपूर्णस्य महतो विच्छेदः केन सिद्ध्यति ॥ ६७४

अच्छिन्नश्छिन्नवद्भाति पामराणां घटादिना ।
ग्रामक्षेत्राद्यवधिभिः भिन्नेव वसुधा यथा ॥ ६७५

तथैव परमं ब्रह्म महतां च महत्तमम् ।
परिच्छिन्नमिवाभाति भ्रान्त्या कल्पितवस्तुना ॥ ६७६

तस्माद्ब्रह्मात्मनोः भेदः कल्पितो न तु वास्तवः ।
अत एव मुहुश्श्रुत्याऽप्येकत्वं प्रतिपाद्यते ॥ ६७७

ब्रह्मात्मनोस्तत्त्वमसीत्यद्वयत्वोपपत्तये ।
प्रत्यक्षादिविरोधेन वाच्ययोर्नोपयुज्यते ।
तत्त्वंपदार्थयोरैक्यं लक्ष्ययोरेव सिद्ध्यति ॥ ६७८

शिष्यः—

स्यात्तत्त्वंपदयोस्स्वामिन् अर्थः कतिविधो मतः ।
पदयोः को नु वाच्यार्थो लक्ष्यार्थ उभयोश्च कः ॥ ६७९

वाच्यैकत्वविवक्षायां विरोधः कः प्रतीयते ।
लक्ष्यार्थयोरभिन्नत्वे स कथं विनिवर्तते ॥ ६८०

एकत्वकथने का वा लक्षणाऽत्रोररीकृता ।
एतत्सर्वं करुणया सम्यक्त्वं प्रतिपादय ॥ ६८१

श्रीगुरुः—

## तत्त्वंपदार्थः.

शृणुष्वावहितो विद्वन् अद्य ते फलितं तपः ।
वाक्यार्थश्रुतिमात्रेण सम्यक् ज्ञानं भविष्यति ॥ ६८२

यावन्न तत्त्वंपदयोः अर्थस्सम्यग्विचार्यते ।
तावदेव नृणां बन्धो मृत्युसंसारलक्षणः ॥ ६८३

अवस्था सच्चिदानन्दाखण्डैकरसरूपिणी ।
मोक्षस्सिद्ध्यति वाक्यार्थापरोक्षज्ञानतस्सताम् ॥ ६८४

वाक्यार्थ एव ज्ञातव्यो मुमुक्षोर्भवमुक्तये ।
तस्मादवहितो भूत्वा शृणु वक्ष्ये समासतः ॥ ६८५

अर्था बहुविधाः प्रोक्ता वाक्यानां पण्डितोत्तमैः ।
वाच्यलक्ष्यादिभेदेन प्रस्तुतं श्रूयतां त्वया ॥ ६८६

## तत्पदार्थः.

वाक्ये तत्त्वमसीत्यत्र विद्यते यत्पदत्रयम् ।
तत्रादौ विद्यमानस्य तत्पदस्य निगद्यते ॥ ६८७

## वाक्यार्थविरोधः.

शास्त्रार्थकोविदैरर्थो वाच्यो लक्ष्य इति द्विधा ।
वाच्यार्थं ते प्रवक्ष्यामि पण्डितैर्य उदीरितः ॥ ६८८

समष्टिरूपमज्ञानं साभासं सत्त्वबृंहितम् ।
वियदादिविराडन्तं स्वकार्येण समन्वितम् ॥ ६८९

चैतन्यं तदवच्छिन्नं सत्यज्ञानादिलक्षणम् ।
सर्वज्ञत्वेश्वरत्वान्तर्यामित्वादिगुणैर्युतम् ॥ ६९०

जगत्स्रष्टृत्वावितृत्वसंहर्तृत्वादिधर्मकम् ।
सर्वात्मना भासमानं यदमेयगुणैश्च तत् ॥ ६९१

अव्यक्तमपरं ब्रह्म वाच्यार्थ इति कथ्यते ।
नीलमुत्पलमित्यत्र यथा वाक्यार्थसङ्गतिः ॥ ६९२

तथा तत्त्वमसीत्यत्र नास्ति वाक्यार्थसङ्गतिः ।
पटाद्व्यावर्तते नील उत्पलेन विशेषितः ॥ ६९३

शौक्ल्याद्व्यावर्तते नीलेनोत्पलं तु विशेषितम् ।
इत्थमन्योन्यभेदस्य व्यावर्तकतया तयोः ॥ ६९४

विशेषणविशेष्यत्वसंसर्गस्येतरस्य वा ।
वाक्यार्थत्वे प्रमाणान्तरविरोधो न विद्यते ॥ ६९५

अतस्सङ्गच्छते सम्यक् वाक्यार्थो बाधवर्जितः ।
एवं तत्त्वमसीत्यत्र वाक्यार्थो न समञ्जसः ॥ ६९६

तदर्थस्य परोक्षत्वादिविशिष्टचितेरपि ।
त्वमर्थस्यापरोक्षत्वादिविशिष्टचितेरपि ॥ ६९७

तथैवान्योन्यभेदस्य व्यावर्तकतया तयोः ।
विशेषणविशेष्यस्य संसर्गस्येतरस्य वा ॥ ६९८

वाक्यार्थत्वे विरोधोऽस्ति प्रत्यक्षादिकृतस्ततः ।

सङ्गच्छते न वाक्यार्थः तद्विरोधं च वच्मि ते ॥ ६९९
सर्वेशत्वस्वतन्त्रत्वसर्वज्ञत्वादिभिर्गुणैः ।
सर्वोत्तमस्सत्यकामः सत्यसङ्कल्प ईश्वरः ॥ ७००
तत्पदार्थस्त्वमर्थस्तु किंचिज्ज्ञो दुःखजीवनः ।
संसार्ययं तद्गतिको जीवः प्राकृतलक्षणः ॥ ७०१
कथमेकत्वमनयोः घटते विपरीतयोः ।
प्रत्यक्षेण विरोधोऽयं उभयोरुपलभ्यते ॥ ७०२
विरुद्धधर्माक्रान्तत्वात् परस्परविलक्षणौ ।
जीवेशौ वह्नितुहिनौ इव शब्दार्थतोऽपि च ॥ ७०३
प्रत्यक्षादिविरोधः स्यादित्यैक्ये तयोः परिस्फुटे ।
श्रुतिवचनविरोधो भवति महान् स्मृतिवचनरोधश्च ॥ ७०४
श्रुत्याऽप्येकत्वमनयोः तात्पर्येण निगद्यते ।
मुहुस्तत्त्वमसीत्यस्मात् अङ्गीकार्यं श्रुतेर्वचः ॥ ७०५
वाक्यार्थत्वे विशिष्टस्य संसर्गस्य च वा पुनः ।
अयथार्थतया सोऽयं वाक्यार्थो न मतश्श्रुतेः ॥ ७०६
अखण्डैकरसत्वेन वाक्यार्थश्श्रुतिसम्मतः ।
स्थूलसूक्ष्मप्रपञ्चस्य सन्मात्रत्वं पुनःपुनः ॥ ७०७
दर्शयित्वा सुषुप्तौ सत् ब्रह्माभिन्नत्वमात्मनः ।
उपपाद्य सदेकत्वं प्रदर्शयितुमिच्छया ॥ ७०८
ऐतदात्म्यमिदं सर्वं इत्युक्त्वैव सदात्मनोः ।
ब्रवीति श्रुतिरेकत्वं ब्रह्मणोऽद्वैतसिद्धये ॥ ७०९
सति प्रपञ्चे जीवे वाऽद्वैतत्वं ब्रह्मणः कुतः
अतस्तयोरखण्डत्वं एकत्वं श्रुतिसम्मतम् ॥ ७१०
विरुद्धांशपरित्यागात् प्रत्यक्षादिर्न बाधते ।

अविरुद्धांशग्रहणं न श्रुत्याऽपि विरुध्यते ॥ ७११

## लक्ष्यार्थनिरूपणम्.

लक्षणा ह्युपगन्तव्या ततो वाक्यार्थसिद्धये ।
वाच्यार्थानुपपत्त्यैव लक्षणाऽभ्युपगम्यते ॥ ७१२

सम्बन्धानुपपत्तिभ्यां लक्षणेति जगुर्बुधाः ।
गङ्गायां घोष इत्यादौ या जहल्लक्षणा मता ॥ ७१३

न सा तत्त्वमसीत्यत्र वाक्य एषा प्रवर्तते ।
गङ्गाया अपि घोषस्याधाराधेयत्वलक्षणम् ॥ ७१४

सर्वो विरुद्धवाक्यार्थः तत्र प्रत्यक्षतस्ततः ।
सङ्गात्सम्बन्धवत्तीरे लक्षणा सम्प्रवर्तते ॥ ७१५

तथा तत्त्वमसीत्यत्र चैतन्यैकत्वलक्षणे ।
विवक्षिते तु वाक्यार्थोऽपरोक्षत्वादिलक्षणः ॥ ७१६

विरुद्ध्यते भागमात्रो न तु सर्वो विरुद्ध्यते ।
तस्माज्जहल्लक्षणायाः प्रवृत्तिर्नात्र युज्यते ॥ ७१७

वाच्यार्थस्य तु सर्वस्य त्यागे न फलमीक्ष्यते ।
नाळिकेरफलस्येव कठिनत्वधिया नृणाम् ॥ ७१८

गङ्गापदं यथा स्वार्थं त्यक्त्वा लक्षयते तटम् ।
तत्पदं त्वंपदं वाऽपि त्यक्त्वा स्वार्थं यथाऽखिलम् ॥ ७१९

तदर्थं वा त्वमर्थं वा यदि लक्षयति स्वयम् ।
तदा जहल्लक्षणायाः प्रवृत्तिरुपपद्यते ॥ ७२०

न शङ्कनीयमित्यार्यैः ज्ञातार्थे न हि लक्षणा ।
तत्पदं त्वंपदं वाऽपि श्रूयते च प्रतीयते ॥ ७२१

तदर्थश्च कथं तत्र संप्रवर्तेत लक्षणा ।

अत्र शोणो धावतीति वाक्यवन्न प्रवर्तते ॥ ७२२

अजहल्लक्षणा वाऽपि साऽजहल्लक्षणा यथा ।
गुणस्य गमनं लोके विरुद्धं द्रव्यमन्तरा ॥ ७२३

अतस्तमपरित्यज्य तद्गुणाश्रयलक्षणः ।
लक्ष्यादिर्लक्ष्यते तत्र लक्षणाऽसौ प्रवर्तते ॥ ७२४

वाक्ये तत्त्वमसीत्यत्र ब्रह्मात्मैकत्वबोधके ।
परोक्षत्वापरोक्षत्वादिविशिष्टचितोर्द्वयोः ॥ ७२५

एकत्वरूपवाक्यार्थो विरुद्धांशाविवर्जनात् ।
न सिध्यति यतस्तस्मात् नाजहल्लक्षणा मता ॥ ७२६

तत्पदं त्वंपदं चापि स्वकीयार्थविरोधनम् ।
अंशं सम्यक्परित्यज्य स्वाविरुद्धांशसंयुतम् ॥ ७२७

तदर्थं वा त्वमर्थं वा सम्यग्लक्षयतः स्वयम् ।
भागलक्षणया साध्यं किमस्तीति न शङ्क्यताम् ॥ ७२८

अविरुद्धं पदार्थान्तरांशं स्वांशं च तत्कथम् ।
एकं पदं लक्षणया संलक्षयितुमर्हति ॥ ७२९

पदान्तरेण सिद्धायां पदार्थप्रमितौ स्वतः ।
तदर्थप्रत्ययापेक्षा पुनर्लक्षणया कुतः ॥ ७३०

तस्मात्तत्त्वमसीत्यत्र लक्षणा भागलक्षणा ।
वाक्यार्थसत्त्वाखण्डकरसतासिद्धये मता ॥ ७३१

भागं विरुद्धं संत्यज्याविरोधो लक्ष्यते यदा ।
सा भागलक्षणेत्याहुः लक्षणज्ञा विचक्षणाः ॥ ७३२

सोऽयं देवदत्त इति वाक्यं वाक्यार्थ एव वा ।
देवदत्तैक्यरूपस्ववाक्यार्थानवबोधकम् ॥ ७३३

देशकालादिवैशिष्ट्यं विरुद्धांशं निरस्य च ।

अविरुद्धं देवदत्तदेहमात्रं स्वलक्षणम् ॥ ७३४

भागलक्षणया सम्यक् लक्ष्यस्तनया यथा ।
तथा तत्त्वमसीत्यत्र वाक्यं वाक्यार्थ एव वा ॥ ७३५

परोक्षत्वापरोक्षत्वादिविशिष्टचितोर्द्वयोः ।
एकत्वरूपवाक्यार्थविरुद्धांशमुपस्थितम् ॥ ७३६

परोक्षत्वापरोक्षत्वसर्वज्ञत्वादिलक्षणम् ।
बुद्ध्यादिस्थूलपर्यन्तं आविद्यकमनात्मकम् ॥ ७३७

परित्यज्याविरुद्धांशं शुद्धचैतन्यलक्षणम् ।
वस्तुकेवलसन्मात्रं निर्विकल्पं निरञ्जनम् ॥ ७३८

लक्ष्यस्तनया सम्यक् भागलक्षणया ततः ।

## अखण्डार्थः.

सर्वोपाधिविनिर्मुक्तं सच्चिदानन्दमद्वयम् ॥ ७३९

निर्विशेषं निराभासं अतादृशमनीदृशम् ।
अनिर्देश्यमनाद्यन्तं अनन्तं शान्तमच्युतम् ॥ ७४०

अप्रतर्क्यमविज्ञेयं निर्गुणं ब्रह्म शिष्यते ।

उपाधिवैशिष्ट्यकृतो विरोधो ब्रह्मात्मनोरेकतयाऽधिगत्या ।
उपाधिवैशिष्ट्य उदस्यमाने न कश्चिदप्यस्ति विरोध एनयोः ॥

तयोरुपाधिश्च विशिष्टता च तद्धर्मभाक्त्वं च विलक्षणत्वम् ।
भ्रान्त्या कृतं सर्वमिदं मृषैव स्वप्नार्थवज्जाग्रति नैव सत्यम् ॥ ७४२

निद्रास्मृतशरीरधर्मसुखदुःखादिप्रपञ्चोऽपि वा
जीवेशादिभिदाऽपि वा न च कृतं कर्तुं क्वचिच्छक्यते ।
मायाकल्पितदेशकालजगदीशादिभ्रमस्तादृशः
को भेदोऽस्त्यनयोर्द्वयोस्तु कतमस्सत्योऽन्यतः को भवेत् ॥ ७४३

न स्वप्नजागरणयोरुभयोर्विशेषः संदृश्यते क्वचिदपि भ्रमजैर्विकल्पैः।
यद्दृष्टदर्शनमुखैरत एव मिथ्या स्वप्नो यथा ननु तथैव हि जागरोऽपि॥

अविद्याकार्यतस्तुल्यौ द्वावपि स्वप्नजागरौ ।
दृष्टदर्शनदृश्यादिकल्पनोभयतस्समा ॥ ७४५

अभाव उभयोस्सुप्तौ सर्वैरप्यनुभूयते ।
न कश्चिदनयोर्भेदः तस्मान्मिथ्यात्वमर्हतः ॥ ७४६

भ्रान्त्या ब्रह्मणि भेदोऽयं सजातीयादिलक्षणः ।
कालत्रयेऽपि हे विद्वन् वस्तुनो नैव कश्चन ॥ ७४७

यत्र नान्यत्पश्यतीति श्रुतिर्द्वैतं निषेधति ।
कल्पितस्य भ्रमाद्ब्रह्मणि मिथ्यात्वावगमाय तत् ॥ ७४८

यतस्ततो ब्रह्म सदद्वितीयं विकल्पशून्यं निरुपाधि निर्मलम् ।
निरन्तरानन्दघनं निरीहं निरास्पदं केवलमेकमेव ॥ ७४९

नैवास्ति काचन भिदा न गुणप्रतीतिः
नो वाक्प्रवृत्तिरपि वा न मनःप्रवृत्तिः ।
यत्केवलं परमशान्तमनन्तमाद्यं
आनन्दमात्रमवभाति सदद्वितीयम् ॥ ७५०

यदिदं परमं सत्यं तत्त्वं सच्चित्सुखात्मकम् ।
अजरामरणं नित्यं सत्यमेतद्वचो मम ॥ ७५१

न हि त्वं देहोऽसावसुरपि च वाऽप्यक्षनिकरो
मनो वा बुद्धिर्वा क्वचिदपि तथाऽहंकृतिरपि ।
न चैषां संघातस्त्वमु भवसि विद्वन् शृणु परं
यदेतेषां साक्षिस्फुरणममलं तत्त्वमसि हि ॥ ७५२

यज्जायते वस्तु तदेव वर्धते तदेव मृत्युं समुपैति काले ।
जन्मैव तेनास्ति तथैव मृत्युः नास्त्येव नित्यस्य विभोरजस्य ॥७५३

तवैष देहो जनितस्स एव समेधते नश्यति कर्मयोगात् ।
त्वमेतदीयास्वखिलास्ववस्थास्ववस्थितस्साक्ष्यसि बोधमात्रः ॥

यत्स्वप्रकाशमखिलात्मकमासुषुप्तेः
एकात्मनाऽहमहमित्यवभाति नित्यम् ।
बुद्धेस्समस्तविकृतेरविकारि बोद्धृ
यद्ब्रह्म तत्त्वमसि केवलबोधमात्रम् ॥ ७८८

स्वात्मन्यनस्तमयसंविदि कल्पितस्य
व्योमादिसर्वजगतः प्रददाति सत्ताम् ।
स्फूर्तिं स्वकीयमहसा वितनोति साक्षात्
यद्ब्रह्म तत्त्वमसि केवलबोधमात्रम् ॥ ७८९

सम्यक्समाधिनिरतैर्विमलान्तरङ्गे
साक्षादवेक्ष्य निजतत्त्वमपारसौख्यम् ।
संतुष्यते परमहंसकुलैरजस्रं
यद्ब्रह्म तत्त्वमसि केवलबोधमात्रम् ॥ ७९०

अन्तर्बहिस्स्वयमखण्डितमेकरूपं आरोपितार्थवदुदञ्चति मूढबुद्धेः ।
मृत्स्नादिवद्विगतविक्रियमात्मवेद्यं यद्ब्रह्म तत्त्वमसि केवलबोधमात्रम्॥
श्रुत्युक्तमव्ययमनन्तमनादिमध्यं अव्यक्तमक्षरमनाश्रयमप्रमेयम् ।
आनन्दसद्घनमनामयमद्वितीयं यद्ब्रह्म तत्त्वमसि केवलबोधमात्रम् ॥

शरीरतद्योगतदीयधर्माद्यारोपणं भ्रान्तिवशात्त्वयीदम् ।
न वस्तुतः किञ्चिदतस्त्वजस्त्वं मृत्योर्भयं क्वास्ति तवासि पूर्णः ॥

यद्यद्दृष्टं भ्रान्तिमत्या स्वदृष्ट्या तत्तत्सम्यग्वस्तुदृष्ट्या त्वमेव ।
त्वत्तो नान्यद्वस्तु किञ्चित्तु लोके कस्माद्भीतिस्ते भवेदद्वयस्य ॥

पश्यतस्त्वहमेवेदं सर्वमित्यात्मनाऽखिलम् ।
भयं स्याद्विदुषः कस्मात् स्वस्मान्न भयमिष्यते ॥ ७९२

तस्मात्त्वमभयं नित्यं केवलानन्दलक्षणम् ।
निष्कलं निष्क्रियं शान्तं ब्रह्मैवासि सदाऽव्ययम् ॥ ७६३

ज्ञातृज्ञानज्ञेयविहीनं ज्ञातुरभिन्नं ज्ञानमखण्डम् ।
ज्ञेयाज्ञेयत्वादिविमुक्तं शुद्धं बुद्धं तत्त्वमसि त्वम् ॥ ७६४

अन्तः प्रज्ञत्वादिविकल्पैः अस्पृष्टं यत्तद्दृशिमात्रम् ।
सत्तामात्रं समरसमेकं शुद्धं बुद्धं तत्त्वमसि त्वम् ॥ ७६५

सर्वाकारं सर्वमसर्वं सर्वनिषेधावधिभूतम् ।
यत्तत्सत्यं शाश्वतमेकमनन्तं शुद्धं बुद्धं तत्त्वमसि त्वम् ॥ ७६६

नित्यानन्दाखण्डैकरसं निष्कलमक्रियमस्तविकारम् ।
प्रत्यगभिन्नं परमव्यक्तं शुद्धं बुद्धं तत्त्वमसि त्वम् ॥ ७६७

त्वं प्रत्यस्ताशेषविशेषं व्योमेवान्तर्बहिरपि पूर्णम् ।
ब्रह्मानन्दं परमद्वैतं नित्यं शुद्धं बुद्धं तत्त्वमसि त्वम् ॥ ७६८

ब्रह्मैवाहमहं ब्रह्म निर्गुणं निर्विकल्पकम् ।
इत्येवाखण्डया वृत्त्या तिष्ठ ब्रह्मणि निष्क्रिये ॥ ७६९

अखण्डामेवैतां घटितपरमानन्दलहरीं
परिध्वस्तद्वैतप्रमितिममलां वृत्तिमनिशम् ।
अमुञ्चानस्स्वात्मन्यनुपमसुखे ब्रह्मणि परे
रमस्व प्रारब्धं क्षपय सुखवृत्त्या त्वमनया ॥ ७७०

ब्रह्मानन्द रसास्वादतत्परेणैव चेतसा ।
समाधिनिष्ठितो भूत्वा तिष्ठ विद्वन्महामुने ॥ ७७१

शिष्यः—

अखण्डाख्या वृत्तिरेषा वाक्यार्थश्रुतिमात्रतः ।
श्रोतुस्संजायते किं वा क्रियान्तरमपेक्षते ॥ ७७२

समाधिः कः कतिविधः तत्सिद्धेः किमु साधनम् ।

समाधेरन्तरायाः के सर्वमेतन्निरूप्यताम् ॥ ७७३

श्रीगुरुः—

## अधिकारिनिरूपणम्.

मुख्यगौणादिभेदेन विद्यन्तेऽत्राधिकारिणः ।
तेषां प्रज्ञानुसारेणाखण्डा वृत्तिरुदेप्यते ॥ ७७४

श्रद्धाभक्तिपुरस्सरेण विहितेनैवेश्वरं कर्मणा
सन्तोष्यार्जिततत्प्रसादमहिमा जन्मान्तरेष्वेव यः ।
नित्यानित्यविवेकतीव्रविरतिन्यासादिभिस्साधनैः
युक्तस्स श्रवणे सतामभिमतो मुख्याधिकारी द्विजः ॥७७५

अध्यारोपापवादक्रममनुसरता देशिकेनात्र वेत्त्वा
वाक्यार्थे बोध्यमाने सति सपदि सतश्शुद्धबुद्धेरमुष्य ।
नित्यानन्दाद्वितीयं निरुपममलं यत्परं तत्त्वमेकं
तद्ब्रह्मैवाहमस्मीत्युदयति परमाखण्डताकारवृत्तिः ॥ ७७६

अखण्डाकारवृत्तिस्सा चिदाभाससमन्विता ।
आत्माभिन्नं परं ब्रह्म विषयीकृत्य केवलम् ॥ ७७७

बाधते तद्गताज्ञानं यदावरणलक्षणम् ।
अखण्डाकारया वृत्त्या त्वज्ञाने बाधिते सति ॥ ७७८

तत्कार्यं सकलं तेन समं भवति बाधितम् ।
तन्तुदाहे तु तत्कार्यपटदाहो यथा तथा ॥ ७७९

तस्य कार्यतया जीववृत्तिर्भवति बाधिता ।
उपप्रभा यथा सूर्यं प्रकाशयितुमक्षमा ॥ ७८०

तद्वदेव चिदाभासचैतन्यं वृत्तिसंस्थितम् ।
स्वप्रकाशं परं ब्रह्म प्रकाशयितुमक्षमम् ॥ ७८१

प्रचण्डातपमध्यस्थदीपवन्नष्टदीधितिः ।

तत्तेजसाऽभिभूतं सत् लीनोपाधितया ततः ॥ ७८२
बिम्बभूतपरब्रह्ममात्रं भवति केवलम् ।
यथाऽपनीते त्वादर्शे प्रतिबिम्बमुखं स्वयम् ॥ ७८३
मुखमात्रं भवेत्तद्वत् एतच्चोपाधिसंक्षयात् ।
घटाज्ञाने यथा वृत्त्या व्याप्तया बाधिते सति ॥ ७८४
घटं विस्फुरयत्येष चिदाभासस्स्वतेजसा ।
न तथा स्वप्रभे ब्रह्मण्याभास उपयुज्यते ॥ ७८५
अत एव मतं वृत्तिव्याप्यत्वं वस्तुनस्सताम् ।
न फलव्याप्यता तेन न विरोधः परस्परम् ॥ ७८६
श्रुत्योदितस्ततो ब्रह्म ज्ञेयं बुद्ध्यैव सूक्ष्मया ।
प्रज्ञामान्द्यं भवेदेषां तेषां न श्रुतिमात्रतः ॥ ७८७
स्यादखण्डाकारवृत्तिः विना तु मननादिना ।

## श्रवणादिनिरूपणम्.

श्रवणान्मननाद्ध्यानात् तात्पर्येण निरन्तरम् ॥ ७८८
बुद्धेस्सूक्ष्मत्वमायाति ततो वस्तूपलभ्यते ।
मन्दप्रज्ञावतां तस्मात् करणीयं पुनःपुनः ॥ ७८९
श्रवणं मननं ध्यानं सम्यग्वस्तूपलब्धये ।
सर्ववेदान्तवाक्यानां षड्भिर्लिङ्गैस्सदद्वये ॥ ७९०
परे ब्रह्मणि तात्पर्यनिश्चयं श्रवणं विदुः ।
श्रुतस्यैवाद्वितीयस्य वस्तुनः प्रत्यगात्मनः ॥ ७९१
वेदान्तवाक्यानुगुणयुक्तिभिस्त्वनुचिन्तनम् ।
मननं, तच्छ्रुतार्थस्य साक्षात्करणकारणम् ॥ ७९२
विजातीयशरीरादिप्रत्ययत्यागपूर्वकम् ।

सजातीयात्मवृत्तीनां प्रवाहकरणं यथा ॥ ७९३

तैलधारावदच्छिन्नवृत्त्या तद्ध्यानमिष्यते ।
तावत्कालं प्रयत्नेन कर्तव्यं श्रवणं सदा ॥ ७९४

प्रमाणसंशयो यावत् स्वबुद्धेर्न निवर्तते ।
प्रमेयसंशयो यावत् तावत्तु श्रुतियुक्तिभिः ॥ ७९५

आत्मयाथार्थ्यनिश्चित्यै कर्तव्यं मननं मुहुः ।
विपरीतात्मधीर्यावत् न विनश्यति चेतसि ।
तावन्निरन्तरं ध्यानं कर्तव्यं मोक्षमिच्छता ॥ ७९६

यावन्न तर्केण निरासितोऽपि दृश्यप्रपञ्चस्त्वपरोक्षबोधात् ।
विलीयते तावदमुष्य भिक्षोः ध्यानादि सम्यक्करणीयमेव ॥ ७९७

## सविकल्पसमाधिः.

स विकल्पो निर्विकल्प इति द्वेधा निगद्यते ।
समाधिस्सविकल्पस्य लक्षणं वच्मि तच्छृणु ॥ ७९८

ज्ञात्राद्यविलयेनैव ज्ञेयब्रह्मणि केवले ।
तदाकाराकारितया चित्तवृत्तेरवस्थितिः ॥ ७९९

सद्भिस्स एव विज्ञेयः समाधिस्सविकल्पकः ।
मृद एवावभानेऽपि मृण्मयद्विपभानवत् ॥ ८००

सन्मात्रवस्तुभानेऽपि त्रिपुटी भाति सन्मयी ।
समाधिरत एवायं सविकल्प इतीर्यते ॥ ८०१

## निर्विकल्पसमाधिः.

ज्ञात्रादिभावमुत्सृज्य ज्ञेयमात्रस्थितिर्दृढा ।
मनसो निर्विकल्पस्स्यात् समाधिर्योगिसंज्ञितः ॥ ८०२

जले निक्षिप्तलवणं जलमात्रतया स्थितम् ।
पृथङ्न भाति किन्त्वम्भ एकमेवावभासते ॥ ८०३

यथा तथैव सा वृत्तिः ब्रह्ममात्रतया स्थिता ।
पृथङ्न भाति ब्रह्मैवाद्वितीयमवभासते ॥ ८०४

ज्ञात्रादिकल्पनाभावात् मतोऽयं निर्विकल्पकः ।
वृत्तेस्सद्भाववाधाभ्यां उभयोर्भेद इष्यते ॥ ८०५

समाधिसुप्त्योर्ज्ञानं चाज्ञानं सुप्त्याऽत्र नेष्यते ।
सविकल्पो निर्विकल्पः समाधिर्द्वाविमौ हृदि ॥ ८०६

मुमुक्षोर्यत्नतः कार्यौ विपरीतविवृत्तये ।
कृतेऽस्मिन्विपरीताया भावनाया निवर्तनम् ॥ ८०७

ज्ञानस्याप्रतिबद्धत्वं सदानन्दश्च सिद्ध्यति ।

## दृश्यानुविद्धसविकल्पः.

दृश्यानुविद्धश्शब्दानुविद्धश्चेति द्विधा मतः ॥ ८०८

सविकल्पस्तयोर्यत्तत् लक्षणं वच्मि तच्छृणु ।
कामादिप्रत्ययैर्दृश्यैः संसर्गो यत्र दृश्यते ॥ ८०९

सोऽयं दृश्यानुविद्धस्स्यात् समाधिस्सविकल्पकः ।
अहंममेदमित्यादिकामक्रोधादिवृत्तयः ॥ ८१०

दृश्यन्ते येन संदृष्टा दृश्यास्स्युरहमादयः ।
कामादिसर्ववृत्तीनां द्रष्टारमविकारिणम् ॥ ८११

साक्षिणं स्वं विजानीयात् यस्ताः पश्यति निष्क्रियः ।
कामादीनामहं साक्षी दृश्यन्ते ते मया ततः ॥ ८१२

इति साक्षितयाऽऽत्मानं जानात्यात्मनि साक्षिणम् ।
दृश्यं कामादि सकलं स्वात्मन्येव विलापयेत् ॥ ८१३

नाहं देहो नाप्यसुर्नाक्षवर्गो नाहङ्कारो नो मनो नापि बुद्धिः ।
अन्तस्तेषां चापि तद्विक्रियाणां साक्षी नित्यः प्रत्यगेवाहमस्मि॥८१४

वाचस्साक्षी प्राणवृत्तेश्च साक्षी. बुद्धेस्साक्षी बुद्धिवृत्तेश्च साक्षी ।
चक्षुश्श्रोत्रादीन्द्रियाणां च साक्षी साक्षी नित्यः प्रत्यगेवाहमस्मि ॥

नाहं स्थूलो नापि सूक्ष्मो न दीर्घो नाहं बालो नो युवा नापि वृद्धः ।
नाहं काणो नापि मूको न षण्डः साक्षी नित्यः प्रत्यगेवाहस्मि ॥

नास्म्यागन्ता नापि गन्ता न हन्ता नाहं कर्ता न प्रयोक्ता न वक्ता ।
नाहं भोक्ता नो सुखी नैव दुःखी साक्षी नित्यः प्रत्यगेवाहमस्मि ॥
नाहं योगी नो वियोगी न रागी नाहं क्रोधी नैव कामी न लोभी ।
नाहं बद्धो नापि युक्तो न मुक्तः साक्षी नित्यः प्रत्यगेवाहमस्मि ॥८१८

नान्तःप्रज्ञो नो बहिःप्रज्ञको वा नैव प्रज्ञो नापि चाप्रज्ञ एषः ।
नाहं श्रोता नापि मन्ता न बोद्धा साक्षी नित्यः प्रत्यगेवाहमस्मि ॥

न मेऽस्ति देहेन्द्रियबुद्धियोगो न पुण्यलेशोऽपि न पापलेशः ।
क्षुधापिपासादिषडूर्मिदूरः सदा विमुक्तोऽस्मि चिदेव केवलः ॥

अपाणिपादोऽहमवागचक्षुषी अप्राण एवास्म्यमना ह्यबुद्धिः ।
व्योमैव पूर्णोऽस्मि विनिर्मलोऽस्मि सदैकरूपोऽस्मि चिदेव केवलः ॥

इति स्वमात्मानमवेक्षमाणः प्रतीतदृश्यं प्रविलापयन्सदा ।
जहाति विद्वान् विपरीतभावं स्वाभाविकं भ्रान्तिवशात्प्रतीतम् ॥
विपरीतात्मतास्फूर्तिः एव मुक्तिरितीर्यते ।
सदा समाहितस्यैव सैषा सिद्ध्यति नान्यथा ॥ ८२३

न वेषभाषाभिरमुष्य मुक्तिः या केवलाखण्डचिदात्मना स्थितिः ।
तत्सिद्धये स्वात्मनि सर्वदा स्थितो जह्यादहन्तां ममतामुपाधौ ॥

स्वात्मतत्त्वं समालम्ब्य कुर्यात्प्रकृतिनाशनम् ।
तेनैव मुक्तो भवति नान्यथा कर्मकोटिभिः ॥ ८२५

ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहानिः ।
इत्येवैषा वैदिकी वाक् ब्रवीति क्लेशक्षत्यामेव जन्मप्रहानिम् ॥

भूयो जन्माद्यप्रसक्तिर्विमुक्तिः क्लेशक्षयां भाति जन्माद्यभावः ।
क्लेशक्षया हेतुरात्मैकनिष्ठा तस्मात्कार्या ह्यात्मनिष्ठा मुमुक्षोः॥८२७

क्लेशास्स्युर्वासना एव जन्तोर्जन्मादिकारणम् ।
ज्ञाननिष्ठाग्निना दाहे तासां नो जन्महेतुता ॥ ८२८

बीजान्यग्निप्रदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथाक्लेशैः नात्मा सम्पद्यते पुनः ॥ ८२९

तस्मान्मुमुक्षोः कर्तव्या ज्ञाननिष्ठा प्रयत्नतः ।
निश्शेषवासनाक्षयै विपरीतनिवृत्तये ॥ ८३०

## ज्ञाननिष्ठायां कर्मानुपयोगः.

ज्ञाननिष्ठातत्परस्य नैव कर्मोपयुज्यते ।
कर्मणो ज्ञाननिष्ठाया न सिद्ध्यति सह स्थितिः ॥ ८३१

परस्परविरुद्धत्वात तयोर्भिन्नस्वभावयोः ।
कर्तृत्वभावनापूर्वं कर्म ज्ञानं विलक्षणम् ॥ ८३२

देहात्मबुद्धेर्विच्छित्त्यै ज्ञानं कर्म विवृद्धये ।
अज्ञानमूलकं कर्म ज्ञानं तूभयनाशकं ॥ ८३३

ज्ञानेन कर्मणो योगः कथं सिध्यति वैरिणा ।
सहयोगो न घटते यथा तिमिरतेजसोः ॥ ८३४

निमेषोन्मेषयोर्वाऽपि तथैव ज्ञानकर्मणोः ।
प्रतीचीं पश्यतः पुंसां कुतः प्राचीविलोकनम् ।
प्रत्यक्प्रवणचित्तस्य कुतः कर्मणि योग्यता ॥ ८३५

ज्ञानैकनिष्ठानिरतस्य भिक्षोः नैवावकाशोऽस्ति हि कर्मतन्त्रे ।
तदेव कर्मास्य तदेव सन्ध्या तदेव सर्वं न ततोऽन्यदस्ति ॥ ८३६

बुद्धिकाल्पितमालिन्यक्षाळनं स्नानमात्मनः ।
तेनैव शुद्धिरेतस्य न मृदा न जलेन च ॥ ८३७

स्वस्वरूपे मनस्थानं अनुष्ठानं तदिष्यते ।
करणत्रयसाध्यं यत् तन्मृषा तदसत्यतः ॥ ८३८

विनिषिध्याखिलं दृश्यं स्वस्वरूपेण या स्थितिः ।
सा सन्ध्या तदनुष्ठानं तद्दानं तद्धि भोजनम् ॥ ८३९

विज्ञातपरमार्थानां शुद्धसत्त्वात्मनां सताम् ।
यतीनां किमनुष्ठानं स्वानुसन्धिं विनाऽपरम् ॥ ८४०

तस्मात्क्रियान्तरं त्यक्त्वा ज्ञाननिष्ठापरो यतिः ।
सदात्मनिष्ठया तिष्ठेत् निश्चलस्तत्परायणः ॥ ८४१

कर्तव्यं स्वोचितं कर्म योगमारोढुमिच्छता ।
आरोहणं कुर्वतस्तु कर्म नारोहणं मतम् ॥ ८४२

योगं समारोहति यो मुमुक्षुः क्रियान्तरं तस्य न युक्तमीषत् ।
क्रियान्तरासक्तमनाः पतत्यसौ ताळद्रुमारोहणकर्तृवद्ध्रुवम् ॥८४३

योगारूढस्य सिद्धस्य कृतकृत्यस्य धीमतः ।
नास्त्येव हि बहिर्दृष्टिः का कथा तत्र कर्मणाम् ।
दृश्यानुविद्धः कथितः समाधिस्सविकल्पकः ॥ ८४४

## शब्दानुविद्धसविकल्पः.

शुद्धोऽहं बुद्धोऽहं प्रत्यग्रूपेण नित्यसिद्धोऽहम् ।
शान्तोऽहमनन्तोऽहं सततपरानन्दसिन्धुरेवाहम् ॥ ८४५

आद्योऽहमनाद्योऽहं वाङ्मनसाऽसाध्यवस्तुमात्रोऽहम् ।
निगमवचोवेद्योऽहं अनवद्याखण्डबोधरूपोऽहम् ॥ ८४६

विदिताविदितान्योऽहं मायातत्कार्यलेशशून्योऽहम् ।
केवलदृगात्मकोऽहं संविन्मात्रस्सकृद्विभातोऽहम् ॥ ८४७

अपरोऽहमनपरोऽहं बहिरन्तश्चापि पूर्ण एवाहम् ।
अजरोऽहमक्षरोऽहं नित्यानन्दोऽहमद्वितीयोऽहम् ॥ ८४८

प्रत्यगभिन्नमखण्डं सत्यज्ञानादिलक्षणं शुद्धम् ।
श्रुत्यवगम्यं तथ्यं ब्रह्मैवाहं परं ज्योतिः ॥ ८४९
एवंसन्मात्रगाहिन्या वृत्त्या तन्मात्रगाहकैः ।
शब्दैस्समर्पितं वस्तु भावयेन्निश्चलो यतिः ॥ ८५०
कामादिदृश्यप्रविलापपूर्वकं शुद्धोऽहमित्यादिकशब्दमिश्रः ।
दृश्येव निष्ठस्य य एष भावः शब्दानुविद्धः कथितस्समाधिः॥ ८५१

## निर्विकल्पसमाधिः.

दृश्यस्यापि च साक्षित्वात् समुल्लेखनमात्मनि ।
निवर्तकमनोऽवस्था निर्विकल्प इतीर्यते ॥ ८५२
सविकल्पसमाधिं यो दीर्घकालं निरन्तरम् ।
संस्कारपूर्वकं कुर्यात निर्विकल्पोऽस्य सिद्ध्यति ॥ ८५३
निर्विकल्पकसमाधिनिष्ठया तिष्ठतो भवति नित्यतः ध्रुवम् ।
उद्भवाद्यपगतिर्निरर्गळा नित्यनिश्चलनिरन्तनिर्वृतिः ॥ ८५४
विद्वानहमिदमिति वा किञ्चित् बाह्याभ्यन्तरवेदनशून्यः ।
स्वानन्दामृतसिन्धुनिमग्नः तूष्णीमास्ते कश्चिदनन्यः ॥ ८५५
निर्विकल्पं परं ब्रह्म यत्तस्मिन्नेव निष्ठिताः ।
एते धन्या एव मुक्ताः जीवन्तोऽपि बहिर्दृशाम् ॥ ८५६

## बाह्यसमाधिप्रकारः.

यथा समाधित्रितयं यत्नेन क्रियते हृदि ।
तथैव बाह्यदेशेऽपि कार्यं द्वैतनिवृत्तये ॥ ८५७
तत्प्रकारं प्रवक्ष्यामि निशामय समासतः ।
अधिष्ठानं परं ब्रह्म सच्चिदानन्दलक्षणम् ॥ ८५८
तत्राध्यस्तमिदं भाति नामरूपात्मकं जगत् ।
सत्त्वं चित्त्वं तथाऽऽनन्दरूपं यद्ब्रह्मणस्त्वयम् ॥ ८५९

अध्यस्तजगतो रूपं नामरूपमिदं द्वयम् ।
एतानि सच्चिदानन्दनामरूपाणि पञ्च च ॥ ८६०

एकीकृत्योच्यते मूर्खैः इदं विश्वमिति भ्रमात् ।
श्वैत्यं शैत्यं रसं दीर्घं तरङ्ग इति नाम च ॥ ८६१

एकीकृत्य तरङ्गोऽयं इति निर्दिश्यते यथा ।
आरोपिते नामरूपे उपेक्ष्य ब्रह्मणस्सतः ॥ ८६२

स्वरूपमात्रग्रहणं समाधिर्ब्राह्म आदिमः ।
सच्चिदानन्दरूपस्य सकाशाद्ब्रह्मणो यतिः ॥ ८६३

नामरूपे पृथक्कृत्य ब्रह्मण्येव विलापयन् ।
अधिष्ठानं परं ब्रह्म सच्चिदानन्दमद्वयम् ।
यत्तदेवाहमित्येव निश्चितात्मा भवेद्ध्रुवम् ॥ ८६४

इयं भूर्न सन्नापि तोयं न तेजो न वायुर्न खं नापि तत्कार्यजातम् ।
यदेषामधिष्ठानभूतं विशुद्धं तदेकं परं सत्तदेवाहमस्मि ॥ ८६५

न शब्दो न रूपं न च स्पर्शको वा तथा नो रसो नापि गन्धो न चान्यः ।
यदेषामधिष्ठानभूतं विशुद्धं तदेकं परं सत्तदेवाहमस्मि ॥ ८६६

न देहो न चाक्षाणि न प्राणवायुर्मनो नापि बुद्धिर्न चित्तं ह्यहंधीः ।
यदेषामधिष्ठानभूतं विशुद्धं तदेकं परं सत्तदेवाहमस्मि ॥ ८६७

न देशो न कालो न दिग्वाऽपि सत्स्यान न वस्त्वन्तरं स्थूलसूक्ष्मादिरूपम्
यदेषामधिष्ठानभूतं विशुद्धं तदेकं परं सत्तदेवाहमस्मि ॥ ८६८

एतद्दृश्यं नामरूपात्मकं योऽधिष्ठानं तद्ब्रह्म सत्यं सदेति ।
गच्छंस्तिष्ठन्वा शयानोऽपि नित्यं कुर्याद्विद्वान् बाह्यशब्दानुविद्धम् ॥

अध्यस्तनामरूपादिप्रविलापेन निर्मलम् ।
अद्वैतं परमानन्दं ब्रह्मैवास्मीति भावयेत् ॥ ८७०

निर्विकारं निराकारं निरञ्जनमनामयम् ।
आद्यन्तरहितं पूर्णं ब्रह्मैवाहं न संशयः ॥ ८७१

निष्कलङ्कं निरातङ्कं त्रिविधच्छेदवर्जितम् ।
आनन्दमक्षरं मुक्तं ब्रह्मैवास्मीति भावयेत् ॥ ८७२

निर्विशेषं निराभासं नित्यमुक्तमविक्रियम् ।
प्रज्ञानैकरसं सत्यं ब्रह्मैवास्मीति भावयेत् ॥ ८७३

शुद्धं बुद्धं तत्त्वसिद्धं परं प्रत्यगखण्डितम् ।
स्वप्रकाशं पराकाशं ब्रह्मैवास्मीति भावयेत् ॥ ८७४

सुसूक्ष्ममस्तितामात्रं निर्विकल्पं महत्तमम् ।
केवलं परमाद्वैतं ब्रह्मैवास्मीति भावयेत् ॥ ८७५

इत्येवं निर्विकारादिशब्दमात्रसमर्पितम् ।
ध्यायतः केवलं वस्तु लक्ष्ये चित्तं प्रतिष्ठति ॥ ८७६

ब्रह्मानन्दरसावेशात् एकीभूय तदात्मना ।
वृत्तेर्या निश्चलावस्था स समाधिरकल्पकः ॥ ८७७

उत्थाने वाऽप्यनुत्थानेऽप्यप्रमत्तो जितेन्द्रियः ।
समाधिषट्कं कुर्वीत सर्वदा प्रयतो यतिः ॥ ८७८

विपरीतार्थधीर्यावत् न निःशेषं निवर्तते ।
स्वरूपस्फुरणं यावत् न प्रसिद्ध्यत्यनिर्गळम् ॥ ८७९

तावत्समाधिषट्केन नयेत्कालं निरन्तरम् ।

## प्रमादत्यागः.

न प्रमादोऽत्र कर्तव्यो विदुषा मोक्षमिच्छता ॥ ८८०

प्रमादे जृम्भते माया सूर्यापाये तमो यथा ।
स्वानुभूतिं परित्यज्य न तिष्ठन्ति क्षणं बुधाः ।

स्वानुभूतौ प्रमादो यः स मृत्युर्न यमस्सताम् ॥ ८८१

अस्मिन् समाधौ कुरुते प्रयासं यस्तस्य नैवास्ति पुनर्विकल्पः ।
सर्वात्मभावोऽप्ययमुनैव सिध्येत् सर्वात्मभावः खलु केवलत्वम् ॥ ८८२

सर्वात्मभावो विदुषो ब्रह्मविद्याफलं विदुः ।
जीवन्मुक्तस्य तस्यैव स्वानन्दानुभवं फलम् ॥ ८८३

योऽहम्ममेत्याद्यसदात्मगाहको ग्रन्थिर्लयं याति स वासनामयः ।
समाधिना नश्यति कर्मबन्धः ब्रह्मात्मबोधोऽप्रतिबन्ध इष्यते ॥ ८८४

एष निष्कण्टकः पन्था मुक्तेर्ब्रह्मात्मना स्थितेः ।
शुद्धात्मनां मुमुक्षूणां यत्सदेकत्वदर्शनम् ॥ ८८५

तस्मात्त्वं चाप्यप्रमत्तः समाधीन् कृत्वा ग्रन्थिं साधु निर्दाह्य युक्तः ।
नित्यं ब्रह्मानन्दपीयूषसिन्धौ मज्जन् क्रीडन्मोदमानो रमस्व ॥ ८८६

## योगः.

निर्विकल्पसमाधिर्या वृत्तिर्नैश्चल्यलक्षणा ।
तमेव योग इत्याहुः योगशास्त्रार्थकोविदाः ॥ ८८७

## अष्टावङ्गानि.

अष्टावङ्गानि योगस्य यमो नियम आसनम् ।
प्राणायामस्तथा प्रत्याहारश्चापि च धारणा ॥ ८८८

ध्यानं समाधिरित्येव निगदन्ति मनीषिणः ।
सर्वं ब्रह्मेति विज्ञानात् इन्द्रियग्रामसंयमः ॥ ८८९

यमोऽयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ।
सजातीयप्रवाहश्च विजातीयतिरस्कृतिः ॥ ८९०

नियमो हि परानन्दो नियमात्क्रियते बुधैः ।
सुखेनैव भवेद्यस्मात् अजस्रं ब्रह्मचिन्तनम् ॥ ८९१

आसनं तद्विजानीयात् इतरत्सुखनाशनम् ।
चित्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात् ॥ ८९२

निरोधस्सर्ववृत्तीनां प्राणायामस्स उच्यते ।
निषेधनं प्रपञ्चस्य रेचकाख्यस्समीरणः ॥ ८९३

ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरीरितः ।
ततस्तद्वृत्तिनैश्चल्यं कुम्भकः प्राणसंयमः ॥ ८९४

अयं चापि प्रबुद्धानां अज्ञानां प्राणपीडनम् ।
विषयेष्वात्मतां त्यक्त्वा मनसश्चितिमज्जनम् ॥ ८९५

प्रत्याहारस्स विज्ञेयोऽभ्यसनीयो मुमुक्षुभिः ।
यत्रयत्र मनो याति ब्रह्मणस्तत्र दर्शनात् ॥ ८९६

मनसो धारणं चैव धारणा सा परा मता ।
ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः ॥ ८९७

ध्यानशब्देन विख्याता परमानन्ददायिनी ।
निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ॥ ८९८
वृत्तिविस्मरणं सम्यक् समाधिर्ध्यानसंज्ञिकः ।

## समाधिविघ्नाः.

समाधौ क्रियमाणे तु विघ्ना ह्यायान्ति वै बलात् ॥ ८९९

अनुसन्धानराहित्यं आलस्यं भोगलालसम् ।
भयं तमश्च विक्षेपः तेजः स्वेदश्च शून्यता ॥ ९००

एवं यद्विघ्नबाहुल्यं त्याज्यं ब्रह्मविदा शनैः ।
विघ्नानेतान् परित्यज्य प्रमादरहितो वशी ।
समाधिनिष्ठया ब्रह्म साक्षाद्भवितुमर्हति ॥ ९०१

## शिष्यस्य स्वानुभवः.

इति गुरुवचनाच्छ्रुतिप्रमाणात्परमवगम्य सतत्त्वमात्मयुक्त्या ।

प्रशमितकरणस्समाहितात्मा क्वचिदचलाकृतिरात्मनिष्ठितोऽभूत् ॥

बहुकालं समाधाय स्वस्वरूपे तु मानसम् ।
उत्थाय परमानन्दात् गुरुमेत्य पुनर्मुदा ॥ ८९३

प्रणामपूर्वकं धीमान् सगद्गदमुवाच ह ।
नमो नमस्ते गुरवे नित्यानन्दस्वरूपिणे ॥ ८९४

मुक्तसङ्गाय शान्ताय त्यक्ताहन्ताय ते नमः ।
दयाधाम्ने नमो भूम्ने महिम्नः पारमस्यते ।
नैवास्ति यत्कटाक्षेण ब्रह्मैवाभवमद्वयम् ॥ ८९५

किं करोमिक........धा ।
मयि सुख........वे ॥* ८९६

नित्यानन्दस्वरूपोऽहं आत्माऽहं त्वदनुग्रहात् ।
पूर्णोऽहमनवद्योऽहं केवलोऽहं च सद्गुरो ॥ ८९७

अकर्ताऽहमभोक्ताऽहं अविकारोऽहमक्रियः ।
आनन्दघन एवाऽहं असङ्गोऽहं सदाशिवः ॥ ८९८

त्वत्कटाक्षशशि... ....क्षणात् ।
छायया .....णम ॥* ९०९

न साक्षिणं [illegible] प्रदीपवत् ।
[illegible] कर्माणि.. [illegible] मे ॥* ९१०

[illegible] मत्वा [illegible] नतिः ।
मुमुक्षा [illegible] प्रष्टुमारभ्य पृच्छत ॥ ९११

जीवन्मुक्तस्य भगवन् [illegible] लक्षणम् ।
विदेहमुक्तस्य च मे कृपया ब्रूहि तत्त्वतः ॥ ९१२

* एतच्चिह्नाङ्किता. श्लोकाः मातृकाकोशे चैवमेवापूर्णा दृश्यन्ते.

श्रीगुरुः—

## ज्ञानभूमिकालक्षणम्.

वक्ष्ये तुभ्यं ज्ञानभूमिकाया लक्षणमादितः ।
ज्ञाते यस्मिन् त्वया सर्वं ज्ञातं स्यात्पृष्टमद्य यत् ॥ ९१३

ज्ञानभूमिश्शुभेच्छा स्यात् प्रथमा समुदीरिता ।
विचारणा द्वितीया तु तृतीया तनुमानसी ॥ ९१४

सत्त्वापत्तिश्चतुर्थी स्यात् ततस्संसक्तिनामिका ।
पदार्थाभावना षष्ठी सप्तमी तुर्यगा स्मृता ॥ ९१५

## शुभेच्छा.

स्थितः किं मूढ एवास्मि प्रेक्ष्योऽहं शास्त्रसज्जनैः ।
वैराग्यपूर्वमिच्छेति शुभेच्छा चोच्यते बुधैः ॥ ९१६

## विचारणा.

शास्त्रसज्जनसम्पर्कवैराग्याभ्यासपूर्वकम् ।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥ ९१७

## तनुमानसी.

विचारणाशुभेच्छाभ्यां इन्द्रियार्थेष्वरक्तता ।
यत्र सा तनुतामेति प्रोच्यते तनुमानसी ॥ ९१८

## सत्त्वापत्तिः.

भूमिकात्रितयाभ्यासात् चित्तेऽर्थविरतेर्वशात् ।
सत्त्वात्मनि स्थिते शुद्धे सत्त्वापत्तिरुदाहृता ॥ ९१९

## संसक्तिनामिका.

दशाचतुष्टयाभ्यासात् असंसर्गफला तु या ।
रूढसत्त्वचमत्कारः प्रोक्ता संसक्तिनामिका ॥ ९२०

## पदार्थाभावना

भूमिकापञ्चकाभ्यासात् स्वात्मारामतया भृशम् ।
अभ्यन्तराणां बाह्यानां पदार्थानामभावनात् ॥ ९२१
परप्रयुक्तेन चिरप्रयत्नेनावबोधनम् ।
पदार्थाभावना नाम षष्ठी भवति भूमिका ॥ ९२२

## तुर्यगा.

षड्भूमिकाचिराभ्यासात् भेदस्यानुपलम्भनात् ।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥ ९२३

## जाग्रज्जाग्रत्.

इदं ममेति सर्वेषु दृश्यभावेष्वभावना ।
जाग्रज्जाग्रदितिप्राहुः महान्तो ब्रह्मवित्तमाः ॥ ९२४

## जाग्रत्स्वप्नः.

विदित्वासच्चिदानन्दे मयि दृश्यपरम्पराम् ।
नामरूपपरित्यागो जाग्रत्स्वप्नस्य ईरितः ॥ ९२५

## जाग्रत्सुप्तिः.

परिपूर्णचिदाकाशे मयि बोधात्मतां विना ।
न किञ्चिदन्यदस्तीति जाग्रत्सुप्तिस्समीर्यते ॥ ९२६

## स्वप्नजाग्रत्.

मूलाज्ञानविनाशेन कारणाभासचेष्टितैः ।
बन्धो न मेऽतिस्वल्पोऽपि स्वप्नजाग्रदितीर्यते ॥ ९२७

## स्वप्नस्वप्नः.

कारणाज्ञाननाशाद्यत् द्रष्टृदर्शनदृश्यता ।
न कार्यमस्ति तज्ज्ञानं स्वप्नस्वप्नस्समीर्यते ॥ ९२८

## स्वप्नसुप्तिः.

अतिसूक्ष्मविमर्शेन स्वधीवृत्तिरचञ्चला ।
विलीयते यदा बोधे स्वप्नसुप्तिरितीर्यते ॥ ९२९

## सुप्तिजाग्रत्.

चिन्मयाकारमतयो धीवृत्तिप्रसरैर्गतः ।
आनन्दानुभवो विद्वन् सुप्तिजाग्रदितीर्यते ॥ ९३०

## सुप्तिस्वप्नः.

वृत्तौ चिरानुभूतान्तरानन्दानुभवस्थितौ ।
समात्मतां यो यात्येष सुप्तिस्वप्नइतीर्यते ॥ ९३१

## सुप्तिसुप्तिः.

दृश्यधीवृत्तिरेतस्य केवलीभावभावना ।
परं बोधैकतावाप्तिः सुप्तिसुप्तिरितीर्यते ॥ ९३२

## तुर्याख्या.

परब्रह्मवदाभाति निर्विकारैकरूपिणी ।
सर्वावस्थासु धारैका तुर्याख्या परिकीर्तिता ॥ ९३३

इत्यवस्थासमुल्लासं विमृशन् मुच्यते सुखी ।
शुभेच्छादित्रयं भूमिभेदाभेदयुतं स्मृतम् ॥ ९३४

यथावद्भेदबुद्ध्येदं जगज्जाग्रदितीर्यते ।
अद्वैते स्थैर्यमायाते द्वैते च प्रशमं गते ॥ ९३५

पश्यन्ति स्वप्नवल्लोकं तुर्यभूमिसुयोगतः ।
पञ्चमीं भूमिमारुह्य सुषुप्तिपदनामिकाम् ॥ ९३६

शान्ताशेषविशेषांशाः तिष्ठेदद्वैतमात्रके ।
अन्तर्मुखतया नित्यं षष्ठीं भूमिमुपाश्रितः ॥ ९३७

परिशान्ततया गाढनिद्रालुरिव लक्ष्यते ।
कुर्वन्नभ्यासमेतस्यां भूम्यां सम्यग्विवासनः ॥ ९३८

तुर्यावस्थां सप्तमीं च क्रमात्प्राप्नोति योगिराट् ।

## विदेहमुक्तिः.

विदेहमुक्तिरेवात्र तुर्यातीतदशोच्यते ।
यत्र नासन्न सच्चापि नाहं नाप्यनहंकृतिः ॥ ९३९

केवलक्षीणमनन आस्तेऽद्वैतेऽतिनिर्णयः ।
*अन्तश्शून्यो....अम्बरे ॥ ९४०

अन्तःपूर्णो....र्णवे ।
यथास्थितमिदं सर्वं व्यव....च ॥ ९४१

अस्त....उच्यते ।
नोदेति....उच्यते ॥ ९४२

यो जागर्ति....ते ।
रागद्वे....ते ॥ ९४३

यस्य नाहं....ते ।
यस्समस्तार्थ....ते ॥ ९४४

द्वैतवर्जित....ते ।
इदं जगदय....ते ॥ ९४५

चिदात्मा....ते ।
देहमृधा....ते ॥ ९४६

यस्य देहादि....ते ।
अहं ब्रह्म....ते ॥ ९४७

जीवन्मुक्ति....दतामिव ।
ततस्तत्सं....विदां च यत् ॥ ९४८

---

*एते श्लोका एवमेवासमग्रा मातृकाकोशे दृश्यन्ते.

विज्ञान....नाम् ।
शिवः....नुगम् ॥ ९४९

यत्सर्वं....स्थितः ।
ब्रह्मैवा....मः ॥ ९५०

यस्य प्रपञ्च....मः ।
चित्तवृत्तेर....र्वेदे—सः ॥ ९५१

जीवात्मप....मः ।
ओंकारवाच्य....सः ॥ ९५२

अहिर्नील्वयनी....भिमन्यते ।
एवं....ते ॥ ९५३

प्रत्यक ज्ञानशिखि....ते ।
नेति....यम् ॥ ९५४

विश्वं च....यम् ।
ब्रह्माण्ड....क्रमात् ॥ ९५५

स्वस्वो....त्मनि ।
तूष्णीं....च न ॥ ९५६

काल....क्रम ।
किंचिद्वदं....ते ॥ ९५७

जीवे....न्विते ।
इदं....पि ॥ ९५८

इति....सः ।
ब्रह्मैव विद्यते साक्षाद्वस्तुतोऽवस्तुतोऽपि च ॥ ९५९

तद्विद्याविषयं ब्रह्म सत्यज्ञानसुखात्मकम् ।
शान्तं च तदतीतं च परं ब्रह्म तदुच्यते ॥ ९६०

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्याऽस्तीह नो माया शान्तं ब्रह्मेदमक्रमम् ॥ ९६१
प्रियेषु स्वेषु सुकृतं अप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माप्येति सदातनम ॥ ९६२
यावद्यावन्मुनिश्रेष्ठ स्वयं संत्यज्यतेऽखिलम ।
तावत्तावत्परा लोकाः परमात्मैव शिष्यते ॥ ९६३
यत्रयत्र मृतो ज्ञानी परमाक्षरवित्सदा ।
परब्रह्मणि लीयेत न तस्योत्क्रान्तिरिष्यते ॥ ९६४
यद्यत्स्वाभिमतं वस्तु तत्त्यजेन्मोक्षमश्नुते ।
असंकल्पनशस्त्रेण छिन्नं चित्तमिदं यथा ॥ ९६५
सर्वं सर्वगतं शान्तं ब्रह्म सम्पद्यते तदा ।
इति श्रुत्वा गुरोर्वाक्यं शिष्यस्तु छिन्नसंशयः ॥ ९६६
ज्ञातज्ञेयस्संप्रणम्य सद्गुरोश्चरणाम्बुजम ।
स तेन समनुज्ञातो ययौ निर्मुक्तबन्धनः ॥ ९६७
गुरुरेष सदानन्दसिन्धौ निर्मग्नमानसः ।
पावयन् वसुधां सर्वां विचचार निरन्तरः ॥ ९६८
इत्याचार्यस्य शिष्यस्य संवादेनात्मलक्षणम ।
निरूपितं मुमुक्षूणां सुखबोधोपपत्तये ॥ ९६९
सर्ववेदान्तसिद्धान्तसारसंग्रहनामकः ।
ग्रन्थोऽयं हृदयग्रन्थिविच्छित्त्यै रचितस्सताम ॥ ९७०
श्रीमद्भिर्भगवत्पादैः आदृत्यायं मुमुक्षुभिः ।
श्रोतव्यो दर्शनीयश्च पठनीयश्च सर्वदा ॥ ९७१

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छङ्कर-
भगवत्पादकृतौ सर्ववेदान्तसिद्धान्त-
सारसंग्रहस्संपूर्णः.

## अनुबन्धः.

१६९ तमपुटे ४८० तमश्लोकानन्तरं पतितत्वेनोत्प्रेक्षिताः श्लोका मातृकायामन्ते कस्मिंश्चित्पत्रे लिखिता अत्र प्रकटीक्रियन्ते—

मूढानां प्रतिबिम्बादौ बालानामिव दृश्यते ।
सादृश्यं विद्यते बुद्धौ आत्मनोऽध्यासकारणम् ॥ १

अनात्मन्यहमित्येव योऽयमध्यास ईरितः ।
स्यादुत्तरोत्तराध्यासे पूर्वपूर्वस्तु कारणम् ॥ २

सुप्तिमूर्छोत्थितेष्वेव दृष्टस्संसारलक्षणः ।
अनादिरेषाऽविद्याऽतः संस्कारोऽपि च तादृशः ॥ ३

अध्यासबाधागमनस्य कारणं शृणु प्रवक्ष्यामि समाहितात्मा
यस्मादिदं प्राप्तमनर्थजातं जन्माप्ययव्याधिजरादिदुःखम् ॥ ४

आत्मोपाधेरविद्याया अस्ति शक्तिद्वयं महत् ।
विक्षेप आवृतिश्चेति याभ्यां संसार आत्मनः ॥ ५

आवृतिस्तमसश्शक्तिः तद्ध्यावरणकारणम् ।
मूलाविद्येति सा प्रोक्ता यया संमोहितं जगत् ॥ ६

विवेकवानप्यतियौक्तिकोपि श्रुतात्मतत्त्वोपि च पण्डितोपि ।
शक्त्या यया संवृतबोधदृष्टिः आत्मानमात्मस्थमिमं न वेद ॥७

विक्षेपनाम्नी रजसस्तु शक्तिः प्रवृत्तिहेतुः पुरुषस्य नित्यम् ।
स्थूलादिलिङ्गान्तमशेषमेतत् यया सदात्मन्यसदेव सूयते ॥ ८

रुद्ग्रा यथा पुरुषमप्रमत्तं समावृणोत्यायमपि प्रतीचम् ।
समावृणोत्यावृतिशक्तिरन्तः विक्षेपशक्तिं परिजृम्भयन्ती ॥ ९

शक्त्या महत्याऽऽवरणाभिधानया समावृते सत्यमलस्वरूपे ।
पुमाननात्मन्यहमेष एवेत्यात्मत्वबुद्धिं विदधाति मोहात् ॥ १०

यथा प्रसुप्तिप्रतिभासदेहे स्वात्मत्वधीरेष तथा ह्यनात्मनः ।

जन्माप्ययक्षुद्भयतृट्छ्रमादीन आरोपयत्यात्मनि तस्य धर्मान् ॥११
विक्षेपशक्त्या परिचोद्यमानः कर्माणि कुर्वन्नुभयात्मकानि ।
भुञ्जान एतत्फलमप्युपात्तं परिभ्रमत्येव भवाम्बुराशौ ॥ १२
अध्यासदोषात्समुपागतोऽयं संसारबन्धः प्रबलप्रतीचः ।
यद्योगतः क्लिश्यति गर्भवासः जन्माप्ययक्लेशभयैरजस्रम् ॥ १३
अध्यासो नाम खल्वेष वस्तुनो योऽन्यथाग्रहः ।
स्वाभाविकभ्रान्तिमूलं संसृतेरादिकारणम ॥ १४
सर्वानर्थस्य तद्बीजं योऽन्यथाग्रह आत्मनः ।
ततस्संसारसंपातः सन्ततक्लेशलक्षणः ॥ १५
अध्यासादेव संसारः नष्टेऽध्यासे न दृश्यते ।
तदेतदुभयं स्पष्टं पश्य त्वं बद्धमुक्तयोः ॥ १६
बद्धं प्रवृत्तितो विद्धि मुक्तं विद्धि निवृत्तितः ।
प्रवृत्तिरेव संसारः निवृत्तिर्मुक्तिरिष्यते ॥ १७
आत्मनस्सोऽयमध्यासो मिथ्याज्ञानपुरस्सरः ।
असत्कल्पोपि संसारं तनुते रज्जुसर्पवत ॥ १८
उपाधियोगसाम्येऽपि जीववत्परमात्मनः ।
उपाधिभेदान्नो बन्धः तत्कार्यमपि किंचन ॥ १९
अस्योपाधिः शुद्धसत्त्वप्रधाना..........................*

- - -

२०५नमपुटे*एतच्चिह्नाङ्कितः पूर्णः श्लोकः—
किं करोमि क गच्छामि किं गृह्णामि त्यजामि किम् ॥
मयि सुखबोधपयोधौ महति ब्रह्माण्डबुद्बुदसाहस्रे ।
मायामयेन मरुता भूत्वाभूत्वा पुनस्तिरोधत्ते ॥

# शुद्धिपत्रिका.

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
| --- | --- | --- | --- |
| १०१ | ४ | भयोत् | भयोस्तत् |
| १७२ | १३ | दह | देह |
| २०३ | १९ | ८९९ | ८८९ |
| २०४ | ,, | ८९० | ९०० |
| ,, | २२ | ८९१ | ९०१ |
| २०५ | ३ | ८९३ | ९०३ |
| ,, | ५ | ८९४ | ९०४ |
| ,, | ८ | ८९५ | ९०५ |
| ,, | १० | ८९६ | ९०६ |
| ,, | १२ | ८९७ | ९०७ |
| ,, | १४ | ८९८ | ९०८ |
| २०६ | २२ | असंम्सर्ग | असंसर्ग |
| २०८ | ,, | विशेषांशाः | विशेषांशः |